टद्विकम् ॥

कटः श्रोणौ क्रियाकारे किलिञ्जेऽतिशये शवे ॥
समये गजगण्डे च पिप्पल्याश्च कटी मता ॥ १ ॥
खटोऽन्धकूपककफयोः प्रहारान्तरटङ्कयोः ॥
भटः पामरभेदे च वीरे च प्रगमे भटिः ॥ २ ॥
घटः समाधिभेदेभशिरःकूटकुटेषु च ॥
घटा घटनगोष्ठीभघटनासु च दृश्यते ॥ ३ ॥
कुटः कोटे घटे गेहे शिलाकुट्टकपूरुषे ॥
स्याच्छुटी कुम्भदास्याश्च सुरायाश्चित्रमुस्तके ॥ ४ ॥
पटः प्रियालवृक्षे च सुचेले च पुरस्कृतौ ॥
पटः प्रमादवचनदोषयोरप्युदाहृतः ॥ ५ ॥
वटो गोले गुले भक्ष्ये वटो साम्यवराटयोः ॥
वटः कपर्दे न्यग्रोधे शुम्बरक्तिकयोर्वटी ॥ ६ ॥
विटोऽद्रौ लवणे पिङ्गे मूषके खदिरेऽपि च ॥
स्फुटो व्यक्ते प्रफुल्ले च व्याप्ते च कलितेऽन्यवत् ॥ ७ ॥
निर्भिन्नकर्कटीसस्ये पादस्फोटे स्फुटिर्मता ॥
कूटं यन्त्रेऽनृते राशौ निश्चले लोहमुद्गरे ॥ ८ ॥
मायाद्रिशृङ्गयोस्तुच्छे सीरावयवदम्भयोः ॥
पुरद्वारे च शंसन्ति लाटो देशेऽशुकेऽपि च ॥ ९ ॥
झाटो निकुञ्जे कान्तारे व्रणसम्मार्ज्जनेऽपि च ॥
वटो वृतौ च मार्गेऽपि वाटी तु गृहानिष्कुटे ॥ १० ॥
चटुश्चाटौ पिचण्डे च व्रतिनामासनान्तरे ॥
कटुः सुगन्धे तीक्ष्णे स्यादकार्ये मक्षरे रसे ॥ ११ ॥
कटुः प्रियङ्गुकटुका राजिकास्वथ दूषणे ॥
कटु प्रोक्तं पटुस्तीक्ष्णे नीरोगे चतुरेऽन्यवत् ॥ १२ ॥

पटुः पटोलपत्रेऽपि छत्रालवणयोः पटुः ॥
खेटः कफे ग्रामभेदे निन्दिते वसुनन्दके ॥ १३ ॥
अट्टं भक्ते च शुष्के च क्षौमेऽत्यर्थे गृहान्तरे ॥
पट्टः पेषणपाषाणे व्रणादीनाञ्च बन्धने ॥ १४ ॥
चतुष्पथे च राजादिशासनान्तरपीठयोः ॥
पट्टी ललाटभूषायां पट्टी लाक्षाप्रसाधने ॥ १५ ॥
क्रुष्टञ्च रोदने रावे कष्टं गहनकृच्छ्रयोः ॥
इष्टमाशंसिते पूज्यतमे प्रियतमेऽन्यवत् ॥ १६ ॥
इष्टं संस्कारयोगे च यागे च क्रतुकर्मणि ॥
रिष्टं क्षेमाशुभाभावकृपाणेषु प्रचक्ष्यते ॥ १७ ॥
म्लिष्टमव्यक्तवाचि स्यान्म्लिष्टं म्लानेऽन्यवन्मतम् ॥
दिष्टं दैवे च काले स्याद्दिष्टः सृष्टं तु निर्मिते ॥ १८ ॥
युक्तनिश्चितयोः प्राज्ये हृष्टो हृषितवन्मतः ॥
रोमाञ्चिते प्रहसिते जातदर्पे च विस्मिते ॥ १९ ॥
व्युष्टं दिने प्रभाते च फले पर्युषितेऽपि च ॥
त्वष्टा शिल्पिनि देवानां तथा वर्द्धकिसूर्ययोः ॥ २० ॥
इष्टिः स्यादभिलाषेऽपि सङ्ग्रहश्लोकयागयोः ॥
विष्टिः कर्मकरे भद्रे प्रेषणे वेतनेऽपि च ॥ २१ ॥
दिष्टिः परीमाणमुदोर्दृष्टिर्विदर्शनाक्षिषु ॥
रिष्टिः खड्गे समृद्धौ च कृष्टिः स्यात् कर्षणे बुधे ॥ २२ ॥
सृष्टिः स्वभावे निर्माणे पुष्टिर्वृद्धौ च पोषणे ॥
यष्टिर्हारलताशस्त्रभेदयोर्ध्वजदण्डके ॥ २३ ॥
भाण्ड्याञ्च मधुयष्ट्याञ्च मुष्टिर्बद्धकरे पले ॥
व्युष्टिः स्याद् घर्षणे विष्णुक्रान्तास्पर्द्धाकिरिष्वपि ॥२४॥
जटालग्नकचे मूले प्लक्षमाक्षिकयोर्जटी ॥

सटा जटाकेशरयोः फटा च फणदम्भयोः ॥ २५ ॥
घोण्टा स्याद् बदरे पूगे घटीखण्डे च वाससः ॥
परीक्षार्थतुलायाञ्च घटः सूरिभिरिष्यते ॥ २६ ॥
पटिः पटविशेषेऽपि द्राशुले कुष्टिकाद्रुमे ॥
स्यात् कोटिरश्रौ चापाग्रे सङ्ख्याभेदप्रकर्षयोः ॥ २७ ॥
स्यात् त्रुटिः संशये लेशे सूक्ष्मैलाकालमानयोः ॥
त्रोटिः स्यात् कट्फले चञ्च्वां खगमीनविशेषयोः ॥ २८ ॥
खाटिः किणे शवरथे खाटिरेकग्रहे स्मृता ॥
नटी हट्टविलासिन्यां शोणके नर्त्तके नटः ॥ २९ ॥

टत्रिकम् ॥

अवटः स्यात् खिले गर्त्ते कूपे कुहकजीविनि ॥
विकटः सुन्दरे प्रोक्तो विशालविकरालयोः ॥ ३० ॥
करटो गजगण्डे स्यात् कुसुम्भे निन्दजीविनि ॥
एकादशाहसार्द्धेऽपि दुर्दुरूढेऽपि वायसे ॥ ३१ ॥
करटो वाद्यभेदेऽपि निर्द्दटो निर्द्दये स्मृतः ॥
परापवादसंरक्ते निर्द्दटो निष्प्रयोजने ॥ ३२ ॥
चिपिटः खाद्यभेदेऽपि चिपिटो विस्तृतेऽन्यवत् ॥
जकुटो यमले ख्यातो वार्त्ताककुसुमे शुनि ॥ ३३ ॥
निष्कुटस्तु गृहोद्याने केदारककपाटयोः ॥
हम्मुटः कच्छपे सूर्येऽप्युत्कटस्तीव्रमत्तयोः ॥ ३४ ॥
चर्पटः स्फारविपुलचपेटे पर्पटेऽपि च ॥
पर्पटः पिष्टविकृतौ पर्पटो भेषजान्तरे ॥ ३५ ॥
पिच्चटो नेत्ररोगे स्यात् पिच्चटं त्रपुसीसयोः ॥
सम्पाटं शिक्यभेदेऽपि धौताञ्जन्यामपि स्मृतम् ॥ ३६ ॥
कर्द्दटः करहाटे स्यात् पङ्कपङ्कारयोरपि ॥

कृपीटमुदरेनीरे कार्पटो जतुकार्यिणोः ॥ ३७ ॥
कुक्कुटस्ताम्रचूडे स्यात् कुक्कुभेऽग्निकणेऽपि च ॥
निषादशूद्रयोः पुत्रे तालमध्ये तु कुक्कुटम् ॥ ३८ ॥
रसो नस्यप्रभेदे स्यादुच्चटा दम्भचर्च्चयोः ॥
केकटः श्रोणके विष्णावऽर्गटोऽन्तर्गले गले ॥ ३९ ॥
कर्कटः करणे स्त्रीणां राशिभेदे कुलीरयोः ॥
शाल्मलीफलवालुक्योः कर्कटी कर्कटः खगे ॥ ४० ॥
कीकटस्तुरगे निःस्वे देशभेदे मितम्पचे ॥
मोचाटः कृष्णजीरे स्याद्रम्भास्थिन मलयोद्भवे ॥ ४१ ॥
चक्राटो विषवैद्येऽपि धूर्त्तदीनारयोरपि ॥
वर्णाटो गायने चित्रकारे स्त्रीकृतजीविनि ॥ ४२ ॥
भावाटो भावके साधुनिवेशे कामुकेऽपि च ॥
शैलाटो देवले सिंहे शुक्लकाचकिरातयोः ॥ ४३ ॥
द्रोहाटः कथितो गाथाप्रभेदे मृगलुब्धके ॥
वैडालवृत्तिकेऽपि स्याद्धाराटश्चातकाश्वयोः ॥ ४४ ॥
मोरटस्तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः ॥
सप्तरात्रात् परे क्षीरे मूर्विकायान्तु मोरटा ॥ ४५ ॥
वेकटः स्याद्वैकटिके तथा सञ्जातयौवने ॥
वेरटो मिश्रिते नीचे वेरटं बदरीफले ॥ ४६ ॥
त्रिकूटं सिन्धुलवणे त्रिकूटश्च सुवेलके ॥
भाकूटः कथ्यते मीनभेदे शैलान्तरेऽपि च ॥ ४७ ॥
अरिष्टः फेनिले निम्बे लशुने काककङ्कयोः ॥
अरिष्टं सूतिकागारे तक्रे चिह्ने शुभाशुभे ॥ ४८ ॥
संसृष्टं तद्गते विद्यात् संशुद्धे वसनादिना ॥
अवटुः कथितो घाटा कूपगर्त्तेषु सूरिभिः ॥ ४९ ॥

परीष्टिः परिचर्यायां प्राकाम्येऽपि गवेषणे ॥
वरटा हंसयोषायां गन्धोल्यां वरटाऽपि च ॥ ५० ॥
त्रिपुटा मल्लिकायाश्च सूक्ष्मैलात्रिवृतोरपि ॥
सतीलके च तीरे च त्रिपुटः समुदाहृतः ॥ ५१ ॥
बर्बटी व्रीहिभेदे स्याद्रघटीपण्ययोरपि ॥
पर्कटी नूतनफले पूगादेः प्लक्षपादपे ॥ ५२ ॥
मर्कटी वानरीशूकशिम्ब्योः स्यात् करजान्तरे ॥
मर्कटस्तूर्णनाभेऽपि कपौ स्त्रीकरणेऽपि च ॥ ५३ ॥
कुरुण्टी दारुपुत्र्याश्च कुरुण्टो झिण्टिकान्तरे ॥
चिरण्टी तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियाम् ॥ ५४ ॥

टचतुष्कम् ॥

श्रुतिकटः प्राश्चलोहे प्रायश्चित्तभुजङ्गयोः ॥
उच्चिङ्गटो मीनभेदे तथा कोपनपूरुषे ॥ ५५ ॥
कुटन्नटस्तु शोणाके कैवर्त्तौ मुस्तकेऽपि च ॥
स्यात् खञ्जरीटः फलकासिधाराव्रतचारिणोः ॥ ५६ ॥
कुण्डकीटस्तु चार्वाकवचनाभिज्ञपूरुषे ॥
जारजब्राह्मणीपुत्रदासीकामुकयोरपि ॥ ५७ ॥
नारकीटोऽश्मकूटे स्यात् स्वदत्ताशाविहन्तरि ॥
कार्यकूटस्तु कृपणोन्मत्तानर्थकरेष्वपि ॥ ५८ ॥
कामकूटस्तु वेश्यायाः प्रियविभ्रमयोर्मतः ॥
चक्रवाटः क्रियारोहे पर्यन्ते च शिखातरौ ॥ ५९ ॥
वर्कराटः कटाक्षे स्यात् तरुणादित्यरोचिषि ॥
स्त्रीणां पयोधरोत्सङ्गकान्तदत्तनखेऽपि च ॥ ६० ॥
करहाटोऽब्जकन्दे स्यात् पुष्पवृक्षप्रभेदयोः ॥
परपुष्टः परभृते परपुष्टाऽऽपणस्त्रियाम् ॥ ६१ ॥

प्रतिकृष्टं मतं गुह्ये द्विरावृत्त्या च कर्षिते ॥
प्रतिकृष्टः प्रेषिते स्यात् प्रत्याख्याते च वाच्यवत् ॥ ६२ ॥
शिपिविष्टस्तु खलतौ शिवे दुश्चर्मणि स्मृतः ॥
चतुःषष्टिर्बह्वृचेऽपि चतुःषष्टिकलास्वपि ॥ ६३ ॥
स्याद्गाढमुष्टिः कृपणे कृपाणादिषु चेष्यते ॥

टपञ्चकम् ॥

अथ स्याद्दशनोच्छिष्टो निश्वासाधरचुम्बयोः ॥ ६४ ॥

इति टान्तवर्गः ॥

—:०:—

ठद्विकम् ॥

कठः स्वर ऋचाम्भेदे स्यात्तदध्येतृवेदिनोः ॥
मुनावपि हठो वारिपर्ण्यां स्यात् प्रसभेऽपि च ॥ १ ॥
शठो मध्यस्थपुरुषे शठो धुत्तूरधूर्त्तयोः ॥
शठोऽलसे च मूर्खे च कुण्ठो कर्मण्यमूर्खयोः ॥ २ ॥
पाठः स्यात् पठने विद्धकर्ण्यां पाठाऽपि पठ्यते ॥
कण्ठो गले संविधाने ध्वनौ मदनपादपे ॥ ३ ॥
वण्टः स्यादकृतोद्वाहे खर्वे कुन्तायुधेऽपि च ॥
पृष्ठं चरमगात्रे स्याद्देहस्यावयवान्तरे ॥ ४ ॥
कोष्ठः कुशूले चात्मीये कुक्षेरन्तर्गृहस्य च ॥
कुष्ठो रोगे सुगन्धे च गोष्ठं गोस्थानकेऽपि च ॥ ५ ॥
गोष्ठी सभायां संलापे दुष्टुः स्याद् दुर्बलेऽधमे ॥
प्रष्ठः श्रेष्ठाग्रयोरुक्तः प्रष्ठा चाण्डालिकौषधौ ॥ ६ ॥
ज्येष्ठः श्रेष्ठेऽतिवृद्धे च ज्येष्ठो मासान्तरेऽपि च ॥
गृहगोधर्क्षयोर्ज्येष्ठा श्रेष्ठा वैश्रवणे वरे ॥ ७ ॥
काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः ॥

स्याद्दिशि स्थानमात्रे च काष्ठमाख्यातमिन्धने ॥ ८ ॥
निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च ॥
षष्ठी षण्णाञ्च पूरण्यां कात्यायन्यामपीष्यते ॥ ९ ॥

ठत्रिकम् ॥

कमठः कच्छपे भाण्डभेदे च कमठं मतम् ॥
जरठः कर्कशे पाण्डौ जरठः कठिनेऽन्यवत् ॥ १० ॥
नर्म्मठश्चूचुके पिङ्गे वैकुण्ठः कृष्णशक्रयोः ॥
श्रीकण्ठः खण्डपरशौ श्रीकण्ठः कुरुजाङ्गले ॥ ११ ॥
वरिष्ठः स्यादुरुतरे प्रवरे तित्तिरावपि ॥
वरिष्ठं मरिचे ताम्रे सादिष्ठोऽतिदृढार्य्ययोः ॥ १२ ॥
अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च ॥
अम्बष्ठा चाम्ललोण्यां स्यात् पाठायूतिकयोरपि ॥ १३ ॥
कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा दुर्बलाङ्गुलौ ॥
लघिष्ठोऽत्यल्पके भेलेऽप्यपष्ठुः कालवालयोः ॥ १४ ॥
प्रकोष्ठो विस्तृतकरे भूपकक्षान्तरेऽपि च ॥
कूर्परादधरे चापि प्रतिष्ठा स्थानमात्रके ॥ १५ ॥
गौरवे यागनिष्पत्तिचतुरक्षरपद्ययोः ॥
मकुष्ठो व्रीहिभेदे स्यान्मकुष्ठो मन्थरेऽन्यवत् ॥ १६ ॥

ठचतुष्कम् ॥

दन्तशठः स्याज्जम्बीरे कपित्थे कर्म्मरङ्गके ॥
नागरङ्गेऽपि चाङ्गेर्य्यां स्मृता दन्तशठा बुधैः ॥ १७ ॥
सूत्रकण्ठो द्विजे प्रोक्तः खञ्जरीटकपोतयोः ॥
हारिकण्ठः परभृते हारान्वितगलेऽपि च ॥ १८ ॥
कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने ॥
सितापाङ्गे हरे पीते सारके नीलकण्ठवत् ॥ १९ ॥

कलकण्ठः कलध्वाने हंसे पारावते पिके ॥
देवकाष्ठन्तु सरलदेवदारुमहीरुहोः ॥ २० ॥
कालपृष्ठं भवेत् कर्णचापे कोदण्डमात्रके ॥
कालपृष्ठस्तु सारङ्गविशेषे कङ्कपक्षिणि ॥ २१ ॥
इति ठान्तवर्गः ॥

—:०:—

डद्विकम् ॥

गुडः स्याद्गोलके हस्ते सन्नाहेक्षुविकारयोः ॥
गुडा स्नुहीगुडिकयोर्गडो मीनान्तराययोः ॥ १ ॥
जडो मूर्खे हिमग्रस्ते शूकशिम्ब्यां जडा मता ॥
गडुः पृष्ठगुडे कुब्जे पडः पेयान्तरे भिदि ॥ २ ॥
व्याडो हिंस्रपशौ सर्पे ताडस्ताडनघोषयोः ॥
मुष्टिमेयतृणादौ च ताडी तालीदलद्रुमे ॥ ३ ॥
नीडं स्थाने कुलाये च सकारपूर्वकोऽन्तिके ॥
क्रोडः सूकरपातङ्गयोः क्रोडं क्रोडे च वक्षसि ॥ ४ ॥
चोडो देशविशेषे स्याच्चोडः प्रावरणान्तरे ॥
क्ष्वेडः कर्णामये ध्वाने गरले कुटिलेऽपि च ॥ ५ ॥
लोहितार्कफले क्ष्वेडं घोषपुष्पे दुरासदे ॥
योधानां सिंहनादे तु क्ष्वेडा स्याद्वंशशल्यके ॥ ६ ॥
अण्डं खगादिकोशे स्यान्मुष्के वीर्येऽपि च क्वचित् ॥
स्यात् खण्डः शकले चेक्षुविकारमणिदोषयोः ॥ ७ ॥
गण्डः कपोले पिटके योगभेदे च गण्डके ॥
गण्डः प्रवीरे चिह्ने स्यादश्वभूषणबुद्बुदे ॥ ८ ॥
चण्डो दैत्यान्तरे तीव्रे चण्डो दासे यमस्य च ॥
चण्डा धनहरीशङ्खपुष्प्योश्चण्डोऽतिकोपने ॥ ९ ॥

चण्डी कात्यायनीहिंस्राकोपनस्त्रीषु सम्मता ॥
षण्डं पद्मादिसङ्घाते खण्डः स्याद् गोपतावपि ॥ १० ॥
कुण्डं देवजलाधारे पिठरेऽथ कमण्डलौ ॥
कुण्डी कुण्डः स्मृतो जारात् पतिवत्नीसुतेऽपि च ॥ ११ ॥
दण्डी यमे मानभेदे लगुडे दमसैन्ययोः ॥
व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥ १२ ॥
अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके ॥
गौडः पामरजातौ च वृद्धनाभौ च वाच्यवत् ॥ १३ ॥
पिण्डं सान्द्रे बलं वोले गृहांशे जीवनायसोः ॥
पिण्डो देहे जवापुष्पे निवापे सिह्लकेऽपि च ॥ १४ ॥
पिण्डी स्यात्तगरेऽलाबुखर्ज्जूरीभेदयोरपि ॥
पण्डः षण्डे धियां पण्डा पाण्डुः कुन्तीपतौ सिते ॥ १५ ॥
मण्डं मस्तुनि शाके च मण्डः स्यात् सारपिच्छयोः ॥
एरण्डे भूषणे चाथ मण्डा धात्र्यामुदीरिता ॥ १६ ॥
मुण्डो दैत्यान्तरे राहौ मूर्द्धमुण्डितयोरपि ॥
शौण्डो मत्तेऽपि विख्यातः शौण्डा पिप्पलिचर्ययोः ॥१७॥
काण्डं नाले तरुस्कन्धे बाणेऽवसरनीरयोः ॥
कुत्सिते रहसि स्तम्बे काण्डं गर्वेऽप्युदाहृतम् ॥ १८ ॥
भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिग्धने ।
नदीपात्रे तुरङ्गाणां भूषणे भाजनेऽपि च ॥ १९ ॥
इडा वाचि गवि क्षोणाविडा च बुधयोषिति ॥
क्रीडा केलिप्रकारे स्यात् खेलावज्ञानयोरपि ॥ २० ॥
चूडा शिखायां वलभौ चूडा बाहुविभूषणे ।
पीडा कृपाशिरोमालापमर्दसरलद्रुषु ॥ २१ ॥
नाडी नाले शिरागण्डदूर्वयोः स्याद्गुणान्तरे ॥

नाडी षट्क्षणकालेऽपि चर्य्यायां कुहनस्य च २२ ॥
रण्डा मूषिकपर्ण्याञ्च रण्डा विधवयोषिति ॥
वण्डाऽपि पांसुलायां स्याद्वण्डो हस्तादिवर्ज्जिते ॥ २३ ॥
शुण्डाऽपि जलहस्तिन्यां मदिराकरिहस्तयोः ॥
नलिन्यां वारयोषायां शुण्डस्तु मदनिर्झरे ॥ २४ ॥

डत्रिकम् ॥

गारुडं स्यान्मरकते विषशास्त्रेऽपि गारुडम् ॥
द्राविडः स्याज्ज्ञानपदे वेधमुख्यकशङ्कयो ॥ २५ ॥
प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि ॥
पिचण्डमुदरे विद्यात् पशोरवयवेऽपि च ॥ २६ ॥
तरण्डो वडिशीसूत्रबद्धवस्तुनि मेलके ॥
वरण्डोऽप्यन्तरावेदौ सन्दोहमुखरोगयोः ॥ २७ ॥
पूत्यण्डो गन्धकीटेऽपि तथा गन्धमृगे स्मृतः ॥
मार्त्तण्डस्तपने क्रोडे शिखण्डो वर्हचूडयोः ॥ २८ ॥
प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः ॥
कोदण्डो भ्रूलतायां स्याद्देशभेदे च कार्म्मुके ॥ २९
सरण्डः सरटे धूर्त्ते सरण्डो भूषणान्तरे ॥
मारुण्डोऽण्डे भुजङ्गीनां मार्गे गोमयमण्डले ॥ ३० ॥
करण्डो मधुकोशासिकारण्डवदलाढके ॥
कूष्माण्डो गणभेदे स्याद् भ्रूणे कर्कारुकेऽपि च ॥ ३१ ॥
कूष्माण्डी चौषधीगौर्य्योर्भेरुण्डो भीमदर्शने ॥
भेरुण्डो देवताभेदे पक्षिणो भिदि चेष्यते ॥ ३२ ॥
वारुण्डः सेकपात्रे स्यान्मले दृक्कर्णयोरपि ॥
गणिस्थराजे वारुण्डी द्वारपिण्ड्यामुदीरिता ॥ ३३ ॥
तिन्तिडी भूरुहे कालदामे दैत्यान्तरेऽपि च ॥

तिन्तिडस्तिन्तिडी तु स्याच्चिञ्चावृक्षाम्लयोरपि ॥ ३४ ॥
विचण्डा सारिकावर्त्तिखड्गधेनुषु कथ्यते ॥
वितण्डा वादभेदे स्यात् कच्छीशाके शिलाह्वये ॥ ३५ ॥
वितण्डा करवीर्याञ्च निर्गुण्डी सिन्दुवारके ॥
नीलशेफालिकायाञ्च करहाटेऽपि कुत्रचित् ॥ ३६ ॥

डचतुष्कम् ॥

भवेद्वातथुडो वात्या वामव्योर्वातशोणिते ॥
पिच्छिलस्फोटिकायाञ्च देवताडस्तु घोपके ॥ ३७ ॥
सैंहिकेयग्रहे चापि देवताडो हुताशने ॥
चक्रवाडोऽद्रिभेदे स्याच्चक्रवाडन्तु मण्डले ॥ ३८ ॥
जलरुण्डो जलावर्त्ते पयोरेणौ भुजङ्गमे ॥
अपोगण्डस्तु शिशुके विकलाङ्गेऽतिभीरुके ॥ ३९ ॥

इति डान्तवर्गः ॥

—:०:—

ढद्विकम् ॥

दृढः स्थूले भृशे शक्ते प्रगाढेऽपि दृढो मतः ॥
बाढं दृढे प्रतिज्ञायां मूढस्तन्द्रितबालयोः ॥ १ ॥
गूढं रहसि गुह्ये च संवृते पुनरन्यवत् ॥
व्यूढः संहतविन्यस्तपृथुलेषु च भेद्यवत् ॥ २ ॥
षण्ढो वर्षधरे क्लीबे गोपतौ बन्ध्यपूरुषे ॥
वोढा स्याद्धारिते सूते सोढा मर्षणशक्तयोः ॥ ३ ॥
राढा सूक्ष्मे च शोभायां दाढा दंष्ट्राभिलाषयोः ॥
माढिः पत्रादिभङ्गौ स्यान्माढिर्दैन्यप्रकाशने ॥ ४ ॥

ढत्रिकम् ॥

आषाढो व्रतिनां दण्डे मासे मलयपर्वते ॥

वारूढः शम्बलेऽपि स्याद्वृत्ताश्वलकपाटयोः ॥ ५ ॥
पञ्जरे पावके वाथ प्ररूढो जठरे स्मृतः ॥
बद्धमूले विरूढस्तु सञ्जातेऽङ्कुरितेऽन्यवत् ॥ ६ ॥
समूढः पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते ॥
उदूढ ऊढे स्थूले स्यादुपोढो निकटोढयोः ॥ ७ ॥
निगूढो गर्हिते गुप्ते प्रमीढो मूत्रिते घने ॥
संरूढोऽङ्कुरिते प्रौढे प्रगाढो दृढपृच्छयोः ॥ ८ ॥
अध्यूढा कृतसापत्न्यां नार्यामध्यूढ ईश्वरे ॥

ढचतुष्कम् ॥

अध्यारूढं समारूढेऽप्यधिके चाऽप्यऽभेद्यवत् ॥ ९ ॥

इति ढान्तवर्गः ॥

---

णद्विकम् ॥

कणोऽतिसूक्ष्मे धान्यांशे कृष्णाजीरकणादिषु ॥
पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे ॥ १ ॥
क्रय्यशाकटिकद्यूतव्यवहारे भृतौ धने ॥
गणः समूहे प्रथमे सङ्ख्यासैन्यप्रभेदयोः ॥ २ ॥
घ्राणं घ्राते च नासायां काणः काकैकचक्षुषोः ॥
बाणः स्यात् केवले काण्डे काण्डावयवदैत्ययोः ॥ ३ ॥
बाणा झिण्ट्यां मता धीरैः शणी माषचतुष्टये ॥
कृपणे करपत्रे च शाणी प्रावरणान्तरे ॥ ४ ॥
त्राणा तु त्रायमानायां रक्षिते रक्षणेऽपि च ॥
प्राणो हृन्मारुते बाले काव्यजीवेऽनिले बले ॥ ५ ॥
वाच्यवत् पूरिते प्राणं प्राणाश्चाऽसुषु कीर्त्तिताः ॥
द्रुणं चापे च खड्गे च द्रुणो वृश्चिकभृङ्गयोः ॥ ६ ॥

द्रुणी कच्छपिकायाञ्च जलद्रोण्यामुदाहृता ॥
द्रोणः कृपीपतौ कृष्णकाके स्यादाढकेऽपि च ॥ ७ ॥
आढवापचतुष्के(१) च द्रोणी स्यान्नीवृदन्तरे ॥
द्रोणी काष्ठाम्बुवाहिन्यां गवाङ्गासभुजि स्थितौ ॥ ८ ॥
मोणः शुष्कफले नक्रमाक्षिकाहिकरण्डयोः ॥
कोणो वाद्यप्रभेदे स्यात् कोणोऽस्त्रे लगुडेऽर्कजे ॥ ९ ॥
वीणा वाद्यादिनोपायेऽप्येकदेशे गृहस्य च ।
शोणः श्योणाकनदयोः शोणः कोकनदच्छदे ॥ १० ॥
लोहिताश्वे कृशानौ च भ्रूणः स्त्रीगर्भडिम्भयोः ॥
तीक्ष्णं सामुद्रलवणे विषलोहाग्निमुष्कके ॥ ११ ॥
तीक्ष्णः सारे च तिग्मात्मत्यागिनोर्वाच्यवद्भवेत् ॥
कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि ॥ १२ ॥
जर्णश्चन्द्रे च वृक्षे च वर्णः काञ्चनयज्ञयोः ॥
वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे ॥ १३ ॥
विलेपने कथायाञ्च वर्णः स्याद् गुणभेदयोः ॥
पर्णं स्यात् किंशुके पत्रे शीर्णं तनुविशीर्णयोः ॥ १४ ॥
पूर्णः शब्दे समग्रे च पूरिते चापि वाच्यवत् ॥
चूर्णं क्षोदे क्षारभेदे चूर्णा निवासयुक्तिषु ॥ १५ ॥
कीर्णं छन्ने परिक्षिप्ते हिंसिते कीर्णमिष्यते ॥
जीर्णं पक्के पुराणे च दीर्णं दारितभीतयोः ॥ १६ ॥
उष्णः स्यादातपे ग्रीष्मे दक्षे कृष्णस्तु केशवे ॥
व्यासेऽर्ज्जुने कोकिले च कृष्णं मरिचलोहयोः ॥ १७ ॥
कृष्णा तु द्रौपदीनीलीहारहूरासु कथ्यते ॥
वाच्यवन्मेचके कृष्णे जिष्णुः शक्रे धनञ्जये ॥ १८ ॥

१ आदर्शे, जाभुजापचतुष्क इति पाठः ।

जित्वरे चाथ विष्णुः स्यात् कृष्णेऽर्के वसुदैवते ॥
गेष्णुर्नटे गायने च देष्णुर्दातरि दुर्दमे ॥ १९ ॥
वृष्णिस्तु यादवे मेषे वार्ष्णिः पाखण्डिचण्डयोः ॥
पार्ष्णिः पाश्चात्यभागे स्यात् पादमूलोन्मदास्त्रियोः ॥ २० ॥
सेनापृष्ठे च कुम्भ्याश्च तृष्णा लिप्सापिपासयोः ॥
ऊर्णा मेषादिलोम्नि स्यादन्तरावर्त्तके भ्रुवोः ॥ २१ ॥
मणिर्गोले मेहनाग्रे रत्ने चाजागलस्तने ॥
अणिराणिवदक्षाग्रकीले स्यादास्तिसीमयोः ॥ २२ ॥
कुणिस्तुन्नकवृक्षेऽपि कुणिः स्यात् कुकरेऽन्यवत् ॥
क्षूणिः क्रमुकभेदेऽपि तुष्टदेवश्रुतावपि ॥ २३ ॥
श्रेणिः पङ्क्तौ सेकपात्रे श्रेणिः स्यात् कारुसंहतौ ॥
वाणिः स्यादूतिभारत्योर्वाणिर्मूल्ये बलाहके ॥ २४ ॥
वेणी कचस्य बन्धे स्यान्नदीनां मेलकेऽपि च ॥
देवताडे च तूणी तु नील्यां तूणौ निषङ्गके ॥ २५ ॥
घृणा जुगुप्साकृपयोः फाणिर्गुडकरम्बयोः ॥
श्राणा यवाग्वां पक्के तु श्राणं स्थूणाऽयसः स्मृता ॥२६॥
प्रतिमायां गृहस्तम्भे वीणा वल्लकिविद्युतोः ॥
वेणुर्भूपान्तरे वंशे स्थाणुः कीले स्थिरे हरे ॥ २७ ॥
रेणुः पर्पटके धूल्यामल्पेऽणुर्व्रीहिसूक्ष्मयोः ॥

णत्रिकम् ॥

अरुणो व्यक्तरागे स्यात् सन्ध्यारागेऽर्कसारथौ ॥ २८ ॥
निःशब्दे कपिले कुष्ठे द्रव्ये वाच्यवदिष्यते ॥
अरुणाऽतिविशाश्यामामञ्जिष्ठात्रिवृतासु च ॥ २९ ॥
करुणस्तु रसे वृक्षे कृपायां करुणा मता ॥
वरुणः सम्मतो नीरे स्वर्लोके परमेष्ठिनि ॥ ३० ॥

वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः ॥
वरणास्तिक्तशाकेऽपि प्राकारे वरणं वृतौ ॥ ३१ ॥
तरुणः स्यान्नवे यूनि कुब्जपुष्पोरुबूकयोः ॥
चरणं बह्वृचादौ स्यान्मूले गोत्रे पदेऽपि च ॥ ३२ ॥
चरणं भ्रमणेऽत्तौ च चरणं रासभध्वनौ ॥
लवणो रसरक्षोऽब्धिभेदेषु लवणान्विते ॥ ३३ ॥
करणं साधनक्षेत्रकाचकायस्थकर्म्मसु ॥
गीताङ्गहारसंवेशक्रियाभेदेन्द्रियेषु च ॥ ३४ ॥
बालवादौ च करणः स्मृतः शूद्राविशोः सुते ॥
जरणं जीरकाजाजिहिङ्गुसौवर्चलेष्वपि ॥ ३५ ॥
धरणं मानभेदेऽपि धारणे धरणीभुवि ॥
रमणं स्यात् पटोलस्य मूलेऽपि रमणः प्रिये ॥ ३६ ॥
शरणं वधरक्षित्रोः शरणं रक्षणे गृहे ॥
कत्तृणं तृणभेदेऽपि वारिपर्ण्याश्च कत्तृणम् ॥ ३७ ॥
यन्त्रणं स्यान्नियमने बन्धने रक्षणेऽपि च ॥
प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे ॥ ३८ ॥
द्रुघणो मुद्गरेऽपि स्याद् द्रुघणा च परश्वधे ॥
प्रवणः क्रमनिम्नोर्व्यामायत्ते च चतुष्पथे ॥ ३९ ॥
प्रगुणेऽपि क्षणेऽपि स्यादीरणं शून्य ऊषरे ॥
ग्रहणं तूपलब्धौ स्यादादरे ग्रहणं करे ॥ ४० ॥
ग्रहोपरागस्वीकारबन्दिषु ग्रहणं मतम् ॥
ईक्षणं दर्शने दृष्टौ प्रोक्षणं सेचने वधे ॥ ४१ ॥
लक्षणं नाम्नि चिह्ने च सौमित्रे चाऽपि लक्षणः ॥
लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः ॥ ४२ ॥
लक्ष्मणौषधिसारस्योः सश्रीके चाभिधेयवत् ॥

दक्षिणः सरलावामपरच्छन्दानुवर्त्तिषु ॥ ४३ ॥
वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोः ॥
द्रविणं काञ्चने वित्ते द्रविणश्च पराक्रमे ॥ ४४ ॥
मसृणः कर्कशे स्निग्धे क्षुमायां मसृणा भवेत् ॥
ऊषणं मरिचे ख्यातं कणायामूषणा भवेत् ॥ ४५ ॥
धिषणस्त्रिदशाचार्य्ये धिषणा धियि सम्मता ॥
धर्षणं स्यात् परिभवे रतेऽसत्यां तु धर्षणी ॥ ४६ ॥
भीषणो दारुणे रुद्रे भीषणं सल्लकीरसे ॥
हरणं यौतुकद्रव्ये भुजेऽपि हरणं हृतौ ॥ ४७ ॥
हिरणं रेतसि स्वर्णे वराटे च हिरण्यवत् ॥
हरिणः स्यात् कुरङ्गेऽपि हारिणः पाण्डुरेऽन्यवत् ॥ ४८ ॥
हरिणी हरितायाश्च चारुस्त्रीवृत्तभेदयोः ॥
सुवर्णप्रतिमायाश्च हर्षणोऽक्षिरुगन्तरे ॥ ४९ ॥
हर्षके योगभेदे च श्राद्धदेवेऽपि क्वचित् ॥
श्रवणं स्याद् वृक्षभेदे श्रवणं श्रुतिकर्णयोः ॥ ५० ॥
श्रावणो मासपाषण्डे दध्यालयां श्रावणी मता ॥
श्रमणो यतिभेदेऽपि श्रमणो निन्द्यजीविनि ॥ ५१ ॥
सुदर्शनामुण्डातिकामांसीषु श्रमणां विदुः ॥
कल्याणमक्षये स्वर्णे कल्याणं मङ्गलेऽपि च ॥ ५२ ॥
कृपाणोऽसौ कृपाणी तु छुरिकायां च कर्तरौ ॥
सिंहाणं काचपात्रे च लोहनासिकयोर्मले ॥ ५३ ॥
पुराणं वाच्यवत् प्रत्ने पुराणं पञ्चलक्षणे ॥
प्रमाणं नित्यमर्यादासत्यवादिप्रमातृषु ॥ ५४ ॥
एकतायामियत्तायां हेतुशास्त्रेषु च स्मृतम् ॥
निर्याणं वानरापाङ्गदेशे मोक्षे च निर्गमे ॥ ५५ ॥

निर्माणं निर्मितौ सारे निर्माणश्च समञ्जसे ॥
निर्वाणमस्तङ्गमने निर्वृतौ गजमज्जने ॥ ५६ ॥
अपवर्गे च कुर्वाणे भृत्यकारकयोरपि ॥
दौर्वाणं नष्टपर्णे स्याद् दूर्वाया: स्वरसेऽपि च ॥ ५७ ॥
वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे ॥
कारणं करणे हेतुबन्धयोरपि कारणम् ॥ ५८ ॥
कारणा यातनायाश्च कृपणः कुत्सिते कृमौ ।
कार्म्मणं मन्त्रतन्त्रादियोजने कर्म्मकारके ॥ ५९ ॥
मार्गणं प्रार्थनेऽन्वेषे मार्गणो याचके सरे ॥
मत्कुणो निर्विषाणेभे निःश्मश्रुपुरुषेऽपि च ॥ ६० ॥
उद्दंशे नारिकेले च धर्म्मणोऽहिद्रुभेदयोः ॥
कोङ्कणो देशभेदे स्याच्छस्त्रभेदे तु कोङ्कणम् ॥ ६१ ॥
कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपि ॥
पूरणः पूरके पिष्टभेदे पूरणमिष्यते ॥ ६२ ॥
पटारम्भकसूत्रे च शाल्मली पूरणी मता ॥
सुषेणः करमर्द्देऽपि विष्णुसुग्रीववैद्ययोः ॥ ६३ ॥
रोपणः पारदे हेमघर्षणोपलयोस्तथा ॥
रोपणेऽपि विषाणन्तु क्रोडाद्विरददन्तयोः ॥ ६४ ॥
पशोः शृङ्गे विषाणा तु मेषशृङ्ग्यां प्रकीर्त्तिता ॥
करेणुर्गजहस्तिन्योः कर्णिकारेऽपि च क्वचित् ॥ ६५ ॥
हरेणुस्तु सतीले स्याद्रेणुकाकुलयोषितोः ॥
सुवर्णं स्वर्णमात्रे स्यात् सुवर्णं कर्षविस्तयोः ॥ ६६ ॥
सुवर्णश्च सुवर्णालुकृष्णागुरुमखान्तरे ॥
सुपर्णस्ताम्रचूडे स्याद्गरुडे कृतमालके ॥ ६७ ॥
सुपर्णा कमलिन्याश्च सुपर्णा तार्क्ष्यमातरि ॥

श्रीपर्णमग्निमन्थेऽब्जे श्रीपर्णी शाल्मलौ हठे ॥ ६८ ॥
दुर्वर्णश्च कुवर्णे स्याद्वास्तुके रजतेऽपि च ॥
पत्रोर्णं धौतकौषेये पत्रोर्णः शोणकेऽपि च ॥ ६९ ॥
सङ्कीर्णं निचिते प्रोक्तमशुद्धे चापि भेद्यवत् ॥
गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे ॥ ७० ॥
अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ ॥
अरणिर्वह्निमन्थेऽपि स्मृतो निर्म्मन्थ्यदारुणि ॥ ७१ ॥
तरणिस्तरणे भानौ कुमार्योषधिनौकयोः ॥
विपणिः पण्यवीथ्याश्च भवेदापणपण्ययोः ॥ ७२ ॥
प्रवेणिर्वेणिकुथयोः सरणिः पङ्क्तिवर्त्मनोः ॥
निःश्रेणिस्त्वधिरोहिण्यां खर्ज्जूरीपादपेऽपि च ॥ ७३ ॥
भरणी शोणके ऋक्षे भरणं वेतने भृतौ ॥
भ्रमणी कारुण्डिकायां क्रीडाद्यायामधीशितुः ॥ ७४ ॥
ग्रामणीर्भोगिके पत्यौ प्रधाने नापितेऽपि च ॥
ग्रामणी नीलिकायाश्च ग्रामेयीपण्ययोषितोः ॥ ७५ ॥
धारणी नाडिकायां स्याद्बुद्धोक्तमन्त्रभिद्यपि ॥
इन्द्राणी करणे स्त्रीणां पौलोमीसिन्धुवारयोः ॥ ७६ ॥
एषणी व्रणमार्गानुसारिण्याश्च तुलाभिदि ॥
क्षेपणी जालभेदे स्यान्नौकादण्डे च कथ्यते ॥ ७७ ॥
वारुणी गण्डदूर्वायां प्रतीचीसुरयोरपि ॥
सारणी स्वल्पसरिते प्रसारण्याश्च सारणी ॥ ७८ ॥
सारणः स्यादतीसारे सचिवे रावणस्य च ॥
काकिणी पणतुर्यांशे मानदण्डे च काकिणी ॥ ७९ ॥
कृष्णलैकवराट्योः स्यादुदमानांशकेऽपि च ॥
ब्राह्मणी पञ्जिकास्पृक्काद्विजपत्नीषु विश्रुता ॥ ८० ॥

विप्रे तु ब्राह्मणो वेदे ब्राह्मणं द्विजसंहतौ ॥
पक्षिणी पूर्णिमायां स्यात् पक्षिणी शाकिनीभिदि ॥ ८१ ॥
आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी ॥
रोहिणी कटुरोहिण्यां रोहिणी लोहितागवोः ॥ ८२ ॥
कण्ठरोगान्तरेभे च सोमवल्के च रोहिणी ॥

णचतुष्कम् ॥

आतर्पणञ्च सौहित्ये विद्यादालिम्पनेऽपि च ॥ ८३ ॥
आथर्वणोऽप्यथर्वज्ञे ब्राह्मणेऽपि पुरोधसि ॥
आरोहणं स्यात् सोपाने समारोहे प्ररोहणे ॥ ८४ ॥
रक्तरेणुस्तु सिन्दूरे पलाशकलिकोद्गमे ॥
उत्क्षेपणन्तु व्यजने धान्यमर्द्दनवस्तुनि ॥ ८५ ॥
उद्धरणं समुद्धारवान्तान्नोन्मूलनेष्वपि ॥
निगरणं भोजनेऽपि गले निगरणो मतः ॥ ८६ ॥
निःशरणं स्यान्मरणोपायनिर्याणमुक्तिषु ॥
संसरणं रणारम्भे पुरनिर्गमगोपुरे ॥ ८७ ॥
घण्टापथे च संसारेऽप्यसम्बाधचमूगतौ ॥
निस्तरणं स्यादुपाये निस्तारे निर्गमेऽपि च ॥ ८८ ॥
विदारणं रणे भेदे विडम्बे च विदारणम् ॥
निरूपणं स्यादालोके विचारे च निदर्शने ॥ ८९ ॥
नारायणोऽच्युतेऽभीरुगौर्य्योर्नारायणीं विदुः ॥
परायणमभीष्टे स्यात् तत्पराश्रययोरपि ॥ ९० ॥
पारायणं समासङ्गे कार्त्स्न्ये पारगतावपि ॥
कार्षापणः कार्षिके स्यात् पणषोडशकेऽपि च ॥ ९१ ॥
कामगुणः स्मृतो रागे विषयाभोगयोरपि ॥
परीरणः स्यात् कमठे दण्डे च पट्टशाटके ॥ ९२ ॥

समीरणः स्यात् पवने पथिके च फणिज्झके ॥
पर्व्वरीणस्तु पर्णस्य शिरायां द्यूतकम्बले ॥ ९३ ॥
पर्णवृन्तरसेऽपि स्यात् पर्व्वरीणश्च पर्व्वणि ॥
तण्डुरीणः कीटमात्रे वर्व्वरे तण्डुलोदके ॥ ९४ ॥
मीनाम्रीणो दर्दुराम्रे मीनाम्रीणश्च खञ्जने ॥
प्रवारणं निषेधे स्यात् काम्यदाने प्रवारणम् ॥ ९५ ॥
जुहुराणोऽनलेऽध्वर्य्यौ रेरिहाणो हरेऽम्बरे ॥
देवमणिः शिवेऽश्वस्य कण्ठावर्त्ते च कौस्तुभे ॥ ९६ ॥
चूडामणिः शिरोरत्ने काकचिञ्चाफलेऽपि च ॥
परवाणिः स्मृतो धर्म्माध्यक्षवत्सरयोरपि ॥ ९७ ॥
शरवाणिः शरमुखे षाण्डकये शरजीविनि ॥
लम्बकर्णः स्मृतः कोलपादपे छगलेऽपि च ॥ ९८ ॥
रागचूर्णः स्मरे दन्तधावने रक्तवालुके ॥
हस्तिकर्णोऽरुबूके स्यात् पलाशगणभेदयोः ॥ ९९ ॥
चीर्णपर्णस्तु निम्बे स्यात् खर्ज्जूरीभूरुहेऽपि च ॥
तैलपर्णी मलयजे श्रीवासे सिह्लकेऽपि च ॥ १०० ॥
पीलुपर्णी तु बिम्बायां मूर्वायामोषधीभिदि ॥
दाक्षायणी त्वपर्णायां रोहिण्यां तारकासु च ॥ १०१ ॥
पुष्करिणी सरोजिन्यां हस्तिन्याञ्च जलाशये ॥
शिखरिणी स्याद्रोमाल्यां रसालावृत्तभेदयोः ॥ १०२ ॥
स्त्रीरत्ने मल्लिकायाञ्च प्रोक्ता शिखरिणी बुधैः ॥
अङ्गारिणी हसन्त्याञ्च भास्करत्यक्तदिश्यपि ॥ १०३ ॥
भवेद्वैतरणी नद्यां प्रेतानां यातुमातरि ॥

णपञ्चकम् ॥

अवग्रहणमित्याहुः प्रतिरोधेऽप्यनादरे ॥ १०४ ॥

प्रविदारणमाख्यातं सङ्गरे च विदारणे ॥
अवतारणं भूतादिग्रहे वस्त्राञ्चलेऽर्च्चने ॥ १०५ ॥
रोमहर्षणमित्येतद् रोमाञ्चेऽपि बिभीतके ॥
परिभाषणमालापे नियमे परिभाषणम् ॥ १०६ ॥
निन्दोपालम्भवचने परिभाषणमिष्यते ॥
मत्तवारणमिच्छान्ति दानक्लिन्नकटद्विपे ॥ १०७ ॥
महाप्रासादवीथीनां वरण्डे चाप्यपाश्रये ॥
वातरायणमुन्मत्ते निष्प्रयोजनपूरुषे ॥ १०८ ॥
काण्डे च करपत्रे च कूटे च शरसङ्क्रमे ॥
मण्डूकपर्णोऽरलुके शोणके च कपीतने ॥ १०९ ॥
मण्डूकपर्णी मञ्जिष्ठाब्राह्मीगोजिह्विकासु च ॥

णषट्कम् ॥

दोहदलक्षणं गर्भे वयःसन्धौ च दृश्यते ॥
यौवनलक्षणाऽभिख्यालावण्ये च पयोधरे ॥ ११० ॥

इति णान्तवर्गः ॥

—:०:—

तद्विकम् ॥

ततं विततवद्व्याप्ते विस्तृते वाच्यवन्मतम् ॥
ततं वीणादिवाद्ये च पवमाने ततः पुनः ॥ १ ॥
इतं गते स्याद्विज्ञाते रतं सुरतगुह्ययोः ॥
इतमुञ्छशिले तोये दीप्ते सत्येऽभिपूजिते ॥ २ ॥
कृतं युगेऽपि पर्याप्ते विहिते हिंसिते फले ॥
घृतमाज्ये प्रदीप्ते च सलिले च घृतं मतम् ॥ ३ ॥
मृतं स्याद्याचिते मृत्यौ मृत्युमत्यभिधेयवत् ॥
गतन्तु यात्राधिगते मतं पूजितसन्धिते ॥ ४ ॥

धुतं त्यक्ते विधूते च धूतं कम्पितभर्त्सिते ॥
पूतं पवित्रे रटिते पूतश्च बहुलीकृते ॥ ५ ॥
श्रुतं शास्त्रावधृतयोः पोतमोतप्रसूतयोः ॥
नतं स्याद्वाच्यवन्नम्रे नतस्तगरपादपे ॥ ६ ॥
द्रुतं शीघ्रे विलीने च विद्रावे चाभिधेयवत् ॥
युतं हस्तचतुष्के स्याद्युतं युक्ते युतं पृथक् ॥ ७ ॥
स्थितं भवेद्गत्यभावे सुप्रतिज्ञे सुनिश्चिते ॥
सितः समाप्ते धवले निबद्धज्ञातयोरपि ॥ ८ ॥
शितं शातश्च निशिते कृशे शान्तश्च शर्मणि ॥
हितं धृते गते पथ्ये सुतः पार्थिवपुत्रयोः ॥ ९ ॥
प्लुतं तुरङ्गमगतौ प्लुतमाहुस्त्रिमात्रके ॥
प्रोतन्तु गुम्फिते वस्त्रे प्रेतो भूतान्तरे मृते ॥ १० ॥
सूतस्तु सारथौ तक्ष्णि प्रसूते प्रेरितेऽपि च ॥
क्षत्रियाद् ब्राह्मणीजेऽपि सूतः पारदबन्दिनोः ॥ ११ ॥
श्वेतं रूप्येऽन्यवच्छुक्ले श्वेतो द्वीपाद्रिभेदयोः ॥
श्वेता वराटिका काष्ठपाटलीशङ्खिनीषु च ॥ १२ ॥
सत् प्रशस्ते विद्यमाने सत्याभिहितसाधुषु ॥
सती पतीव्रतागौर्योरेतः कर्बूर आगते ॥ १३ ॥
तातोऽनुकम्प्ये जनके जातं जात्योघजन्मसु ॥
पातः स्यात् पतने त्राते घातः काण्डप्रहारयोः ॥ १४ ॥
पोतः शिशौ वहित्रे च लते श्मश्रुणि चोरिते ॥
गीतन्तु शब्दिते गाने प्रीतं हृषितनर्मणोः ॥ १५ ॥
वीतश्चासारहस्त्यश्वे वीतमङ्कुशकर्मणि ॥
भीतं भये भययुते वाच्यवत् परिकीर्त्तितम् ॥ १६ ॥
भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः ॥

भूतो देवलके प्राप्तवृत्तयोरभिधेयवत् ॥ १७ ॥
केतुर्द्युतौ पताकायां ग्रहोत्पातारिलक्ष्मसु ॥
सेतुरालौ च वरुणे क्रतुर्यज्ञे मुनेर्भिदि ॥ १८ ॥
धातुः स्यादश्मविकृतौ विषयेष्विन्द्रियेषु च ॥
भूवादिरसरक्तादिश्लेष्मादिवसुधादिषु ॥ १९ ॥
वर्त्तते धातुशब्दोऽयं विशेषादस्थ्नि गैरिके ॥
ऋतुः स्त्रीकुसुमे मासि वसन्तादिषु धारयोः ॥ २० ॥
गातुः पुंस्कोकिले भृङ्गे गन्धर्वे रोषणेऽपि च ॥
मन्तुः स्यादपराधेऽपि मनुष्येऽपि प्रजापतौ ॥ २१ ॥
धूर्त्तः स्यात् खण्डलवणे खलधुत्तूरयोरपि ॥
पूर्त्तस्तु पूरिते छन्ने पूर्त्तं खातादिकर्मणि ॥ २२ ॥
मूर्त्तं मूर्त्तिमित प्रोक्तं मूर्च्छाले कठिनेऽपि च ॥
गर्त्तास्त्रिगर्त्तभेदे स्यादवटे च कुकुन्दरे ॥ २३ ॥
आप्तः सभ्ये च लब्धे च प्राप्तं विते समञ्जसे ॥
व्याप्तं ख्याते समाक्रान्ते गुप्तं रक्षितगूढयोः ॥ २४ ॥
लिप्तं विषाप्ते गुप्ते च वाच्यवत् स्याद्विलेपिते ॥
दीप्तं निर्भासिते दग्धे वदन्ति ज्वलितेऽपि च ॥ २५ ॥
अस्तं क्षिप्ते गते प्रोक्तमस्तः पश्चिमभूधरे ॥
ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते ॥ २६ ॥
पुस्तन्तु पुस्तके लेख्यकर्मविज्ञानयोरपि ॥
शस्तं क्षेमे प्रशस्ते च व्यस्तं व्याप्ते च सङ्कुले ॥ २७ ॥
हस्तो नक्षत्रभेदे स्यात् करेभकरयोरपि ॥
कचात्परः कलापार्थे सप्रकोष्ठे तताङ्गुलौ ॥ २८ ॥
वित्तं ख्याते धने लब्धे वित्तं ज्ञाते विचारिते ॥
कृत्तन्तु चेष्टिते छिन्ने दत्तं विश्राणितेऽर्चिते ॥ २९ ॥

वृत्तोऽतीते दृढे ख्याते वर्त्तुलेऽपि वृते मृते ॥
वाच्यवद्वर्त्तते वृत्तं चरित्रच्छन्दसोरपि ॥ ३० ॥
अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे ॥
वृन्तं प्रसवबन्धे स्याद्घटधाराकुचाग्रयोः ॥ ३१ ॥
दन्तो निकुञ्जे दशने दन्तः सानुनि कथ्यते ॥
दन्ती स्यादोषधीभेदे कान्तचेतसि गह्वरे ॥ ३२ ॥
कुन्तः प्रासे चण्डभावे क्षुद्रजन्तौ गवेधुके ॥
कुन्ती पाण्डुप्रियायाञ्च शल्लक्यां गुग्गुलुद्रुमे ॥ ३३ ॥
कान्तोऽश्मनि गृहे चारौ कान्तानुफालिनीस्त्रियोः ॥
शान्तो रसविशेषे स्याददतिभुक्तकदान्तयोः ॥ ३४ ॥
उक्तमेकाक्षरं छन्दस्युक्तं स्याद्भाषितेऽपि च ॥
शुक्तोऽम्ले परुषे पूते व्यक्तं स्फुटमनीषिणोः ॥ ३५ ॥
तिक्तो रसे सुगन्धे च तिक्तं पर्पटके स्मृतम् ॥
तिक्ता तु कटुरोहिण्यां रिक्तं काननशून्ययोः ॥ ३६ ॥
रक्तं स्यात् कुङ्कुमे ताम्रे प्रचीनामलकेऽसृजि ॥
अनुरागिणि नील्यादिरञ्जिते लोहितेऽन्यवत् ॥ ३७ ॥
यन्ता हस्तिपके सूते वप्ता पितरि पावके ॥
त्रेता युगेऽग्नित्रितये भर्त्ता स्वामिनि धारके ॥ ३८ ॥
शास्ता च शासके बुद्धे वक्ता वाग्मिनि पण्डिते ॥
मुक्ता तु मौक्तिके मुक्तः प्राप्तमुक्ते च मोचने ॥ ३९ ॥
क्षत्ता शूद्रात् क्षत्रियाजे प्रतीहारे च सारथौ ॥
भुजिष्यतनये क्षत्ता नियुक्ते च प्रजासृजि ॥ ४० ॥
धाता हिरण्यगर्भे स्यात् पालके त्वभिधेयवत् ॥
माता कात्याप्रसूगोषु ब्रह्मण्याद्यास्तु मातरः ॥ ४१ ॥
लता ज्योतिष्मती स्पृक्का शाखावल्लीप्रियङ्गुषु ॥

लताकस्तूरिकायाञ्च माधवीदूर्वयोरपि ॥ ४२ ॥
लूता पिपीलिकायां स्यादूर्णनाभे गदान्तरे ॥
पीता स्मृता हरिद्रायां पीतं स्याद्गौरपीतयोः ॥ ४३ ॥
सीता रामकलत्रे स्यात् तथा लाङ्गलपद्धतौ ॥
नभोनद्याञ्च शीतस्तु वानीरबहुवारयोः ॥ ४४ ॥
शीतं हिमगुणे प्रोक्तं वाच्यवच्छीतलेऽलसे ॥
चिता च्छन्ने चुल्लिकायां चिता संहतिचिन्तयोः ॥ ४५ ॥
वार्त्ता वातिङ्गणे वृत्तौ वार्त्ता कृष्याद्युदन्तयोः ॥
वृत्तिमन्नीरजोर्वार्त्ता वार्त्तमारोग्यफल्गुनोः ॥ ४६ ॥
गतिर्मार्गे दशायांञ्च ज्ञाने यात्राभ्युपाययोः ॥
नाडीव्रणसरण्याञ्च मतिर्हीच्छास्मृतिष्वपि ॥ ४७ ॥
चितिः समूहे चिन्तायां दितिः स्यात् खण्डने दितौ ॥
पतिः प्रभौ गतौ मूले दृतिश्चर्म्मपुटे झषे ॥ ४८ ॥
यतिर्निकारे यतिनि पाठच्छेदक्रमे यतिः ॥
शितिः कृष्णे शितिर्भूर्ज्जे भृतिर्भरणमूल्ययोः ॥ ४९ ॥
क्षितिर्निवासे मेदिन्यां स्थानमात्रेऽपि च क्षितिः ॥
धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु ॥ ५० ॥
श्रुतिः श्रोत्रे तथाऽऽम्नाये वार्त्तायां श्रोत्रकर्मणि ॥
स्मृतिरिच्छाधियोर्धर्मसंहितायामपि स्मृतिः ॥ ५१ ॥
रतिः स्मरप्रियायाञ्च रागे च रमणे रतिः ॥
ऋतिर्गतौ जुगुप्सायां स्पर्द्धामङ्गलयोरपि ॥ ५२ ॥
वृत्तिः स्याद्वरणे वाटे मृतिर्गगनमार्गयोः ॥
मितिर्मानेऽप्यवच्छेदे कृतिः करणहिंसयोः ॥ ५३ ॥
ईतिः प्रवासे डिम्बे स्यादतिवृष्ट्यादिषट्सु च ॥
वीतिर्गतौ च दीप्तौ च धावने प्रजनेऽशने ॥ ५४ ॥

गीतिश्छन्दसि गाने च नीतिस्तु प्रापणे नये ॥
रीतिः प्रसारे स्यन्दे च लोहाकिट्टारकूटयोः ॥ ५५ ॥
पीतिः पाने तुरङ्गे च भीतिः साध्वसकम्पयोः ॥
प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीप्रमोदयोः ॥ ५६ ॥
भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि सम्पदि ॥
स्यूतिः सीवनसन्तत्योरूतिः स्यूतौ च रक्षणे ॥ ५७ ॥
हेतिः स्यादायुधे ज्वाले हेतिस्तरणितेजसि ॥
वृत्तिर्विवरणे जीव्ये कौशिक्यादिषु चेष्यते ॥ ५८ ॥
कृत्तिश्चर्मत्वचो भूर्ज्जे कृत्तिकायाश्च कीर्त्तिता ॥
पत्तिः पदातौ गमने वीरसैन्यप्रभेदयोः ॥ ५९ ॥
वित्तिर्ज्ञाने विचारे च लाभसम्भवयोरपि ॥
भित्तिः कुड्ये प्रदेशे च संविभागावकाशयोः ॥ ६० ॥
आप्तिः संवरणप्राप्त्योः प्राप्तिर्लाभे महोदये ॥
गुप्तिः कारागृहे प्रोक्ता भूगर्त्ते रक्षणे यमे ॥ ६१ ॥
सुप्तिः स्पर्शज्ञतायाश्च स्वापे विश्रम्भघातिनि ॥
शान्तिः शमेऽपि कल्याणे कान्तिः शोभाभिलाषयोः ॥६२॥
जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः ॥
जातिर्जातीफले धात्र्यां चुल्लीकाम्पिल्लयोरपि ॥ ६३ ॥
ज्ञातिः सगोत्रे पितरि व्याप्तिर्व्यापनलम्भयोः ॥
सातिर्दानेऽवसाने च प्राप्तिः पूर्त्तिप्रदेशयोः ॥ ६४ ॥
वर्त्तिर्दीपदशादीपगात्रानुलेपनीषु च ॥
वर्त्तिर्भेषजनिर्म्माणनयनाञ्जनलेखयोः ॥ ६५ ॥
आर्त्तिः पीडाधनुष्कोट्योर्मूर्त्तिः काठिन्यकाययोः ॥
कीर्त्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च ॥ ६६ ॥
भ्रान्तिर्मिथ्यामतौ ख्याता भ्रमणे चाऽनवस्थितौ ॥

नृतिः कृमौ नर्त्तने च सन्नः सरिति वर्त्मनि ॥ ६७ ॥
भक्तिर्विभागे सेवायां पङ्क्तिर्गौरवपाकयोः ॥
मुक्तिः स्यान्मोचने मोक्षे युक्तिर्न्याये च योजने ॥ ६८ ॥
पङ्क्तिर्दशाक्षरच्छन्दोदशसङ्ख्यावलीष्वपि ॥
शक्तिर्बले प्रभावादौ शक्तिः प्रहरणान्तरे ॥ ६९ ॥
शुक्तिः कपालशकले नख्यश्वावर्त्तयोरपि ॥
मुक्तास्फोटे च दुर्नामा शङ्खशङ्खनखेषु च ॥ ७० ॥

तत्रिकम् ॥

अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते ॥
अयाचिते च मोक्षे च धन्वन्तरिसुपर्वणोः ॥ ७१ ॥
स्यादमृतोऽमृतापथ्यागुडूच्यामलकीषु च॥
अनृतं कृषावसत्येऽप्यजितः कमलापतौ ॥ ७२ ॥
अनिर्ज्जिते चाच्युतस्तु स्थिरे स्याद्गरुडध्वजे ॥
अर्द्दितं याचिते ज्ञेयं वातव्याधौ च हिंसिते ॥ ७३ ॥
अक्षतश्चापि लाजेषु तृतीयप्रकृतावपि ॥
अहिंसितेऽपि चापातस्तदात्वे पतनेऽपि च ॥ ७४ ॥
आघ्रातं शिङ्घिते क्रान्तेऽप्याख्यातं भाषिते तिङि ।
आध्मातं पवनव्याधौ दग्धशब्दितयोरपि ॥ ७५ ॥
आप्लुतः स्नातके स्नातेऽप्याहृतः सादरेऽर्च्चिते ॥
आचितः शकटोन्मेये पलानामयुतद्वये ॥ ७६ ॥
छन्नेऽपि सङ्गृहीते स्यादाहतन्तु मृषार्थके ॥
आहतं गुणितेऽपि स्यात् ताडिते नामितेऽपि च ॥ ७७ ॥
स्यात् पुरातनवस्त्रे च नूतनवस्त्रे त्वाहतम् ॥
आनर्त्तो देशभेदे स्यान्नृत्यस्थाने जने रणे ॥ ७८ ॥
आवर्त्त आवर्त्तने स्याच्चिन्तने चाम्भसाम्भ्रमे ॥

संवर्त्तः प्रलये प्रोक्तो बिभीतकतरावपि ॥ ७९ ॥
त्रिगर्त्तः स्याज्जनपदे त्रिगर्त्तो गणितान्तरे ॥
भवेद् घर्घरिकायान्तु त्रिगर्त्ता कामुकस्त्रियाम् ॥ ८० ॥
विवर्त्तः समुदाये स्यादपवर्त्तननृत्ययोः ॥
उत्तप्तं शुष्कमांसेऽपि सन्तप्ते च परिप्लुवे ॥ ८१ ॥
उचितं प्रोक्तमभ्यस्ते मिते ज्ञाते समञ्जसे ॥
उद्धृत्तं स्यादुत्तुलिते परिमुक्तोज्झितेऽपि च ॥ ८२ ॥
उत्थितं वृद्धियुक्ते च प्रोद्यतोत्पन्नयोरपि ॥
उषितं व्युषिते दग्धे मुषितं खण्डिते हृते ॥ ८३ ॥
उद्घातः कथ्यते पादस्खलने समुपक्रमे ॥
पवनाभ्यासयोगस्य कुम्भकादित्रयेऽपि च ॥ ८४ ॥
उत्तुङ्गे मुद्गरेऽपि स्यादुदितं प्रोक्त उद्गते ॥
स्यादुच्छ्रितन्तु सञ्जाते समुन्नद्धप्रवृद्धयोः ॥ ८५ ॥
रजतं विशदे दन्तिदन्तयोस्तारहारयोः ॥
सुरतं स्यान्निधुवने देवत्वे सुरता मता ॥ ८६ ॥
प्रहतं विजिते क्षुण्णे संहतं संहते दृढे ॥
रसितन्तु सुवर्णादिखचिते स्तानिते रुते ॥ ८७ ॥
पलितं शैलजे तापे पाण्डुकेशे च कर्द्दमे ॥
ललितं हारभेदे स्यादीप्सिते ललितेऽपि च ॥ ८८ ॥
स्खलितं चलिते भ्रंशे कलितं विदिताप्तयोः ॥
ज्वलितं भास्वरे दग्धे त्वरितं प्रजवे द्रुते ॥ ८९ ॥
स्तिमितोऽचञ्चलक्लिन्ने हंसितं क्षिप्तदग्धयोः ॥
सुहितोऽतिहिते तृप्ते मूर्च्छितं सोच्छ्रये दृढे ॥ ९० ॥
हृषितं विस्मिते प्रीते प्रणते हृष्टरोमणि ॥
गर्ज्जितो मत्तमातङ्गे गर्ज्जितं जलदध्वनौ ॥ ९१ ॥

वर्द्धितं प्रसुते च्छिन्ने पूरिते चापि वर्द्धितम् ॥
स्थापितं निश्चिते न्यस्ते चेङ्गितं गतिचेष्टयोः ॥ ९२ ॥
वेष्टितं रसके रुद्धे स्त्रीणाञ्च करणान्तरे ॥
भावितं वासिते प्राप्ते विदितं विदितार्थयोः ॥ ९३ ॥
वेल्लितं कुटिले प्रोक्तं वाच्यवद्विधृते प्लुते ॥
ग्रथितं गुम्फिताक्रान्तहिंसितेषु समीरितम् ॥ ९४ ॥
प्रथितं निर्ज्जलोदश्वित्यालोडितनिघृष्टयोः ॥
प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहितेऽपि च ॥ ९५ ॥
जृम्भितं करणे स्त्रीणामीहास्फुटितयोरपि ॥
क्रन्दितं ख्यातमाह्वाने क्रन्दितं रुदितेऽपि च ॥ ९६ ॥
प्रोक्षितं निहते क्षिप्ते वापितं मुण्डितं मतम् ॥
बीजाकृतं दंशितस्तु दुष्टचर्म्मितयोरपि ॥ ९७ ॥
क्षारितः स्रावितं सारे चाभिशस्ते च संशितः ॥
सुकृतश्च शुभे पुण्ये सुविधाने च वाच्यवत् ॥ ९८ ॥
निकृतं विप्रलब्धे स्यान्नीचे विप्रकृतेऽपि च ॥
विकृतौ संस्कृतेऽपि स्याद् वीभत्से रोगितेऽपि च ॥ ९९
संस्कृतः कृत्रिमे शस्ते भूषिते भेद्यवन्मतः ॥
संस्कृतं लक्षणोपेता प्रभूतं प्राज्य उद्गते ॥ १०० ॥
प्रसृतः सप्रसारे स्याद्विनीते विगतेऽपि च ॥
अर्द्धाञ्जलौ च प्रसृतं जङ्घायां प्रसृता मता ॥ १०१ ॥
सूनृतं मङ्गले सत्यप्रियवाचि च सूनृतम् ॥
प्रसूतं वाच्यवज्जाते प्रसूतं कुसुमेऽपि च ॥ १०२ ॥
विसृतं ज्ञातसंहृष्टप्रतीतेष्वाभिधेयवत् ॥
निर्मुक्तस्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि ॥ १०३ ॥
अव्यक्तः शङ्करे विष्णावव्यक्तं महदादिके ॥

आत्मन्यपि स्यादव्यक्तमस्फुटे चाऽभिधेयवत् ॥ १०४ ॥
विविक्तं स्यादसम्पृक्ते विवेकान्वितपूतयोः ॥
वाच्यवद्दर्शितो धीरैर्विविक्तं रहसि स्मृतम् ॥ १०५ ॥
रोहितं रुधिरे धीर ऋजुशक्रशरासने ॥
रोहितो मानमृगयोर्भेदे रोहितकद्रुते ॥ १०६ ॥
लोहितं कुङ्कुमे रक्ते गोशीर्षे च कुचन्दने ॥
लोहितः स्यान्नदे भौमे वर्णभेदे तु वाच्यवत् ॥ १०७ ॥
कुटितं स्याद्धस्तपुटे पाटितस्यूतयोरपि ॥
पीडितं बाधिते स्त्रीणां करणे चापि यन्त्रिते ॥ १०८ ॥
पिण्डितं गणिते सान्द्रे पण्डितः सल्लुके कवौ ॥
हारीतः पक्षिभेदे स्यान्मुनिभेदेऽपि कैतवे ॥ १०९ ॥
प्रणीतः संस्कृते वह्नौ विहिते च प्रवेशिते ॥
निक्षिप्ते चोपसम्पन्ने प्रणीतो भेद्यवन्मतः ॥ ११० ॥
प्रतीतः सादरे ज्ञाते प्रख्यातः ख्यातहृष्टयोः ॥
वाच्यवत् स्यात् प्रमीतन्तु प्रोक्षितेऽपि मृतेऽपि च ॥१११॥
विनीतमुपनीते स्यादपनीते जितेन्द्रिये ॥
वाणिजे सुवहेऽश्वे च निभृते चाभिधेयवत् ॥ ११२ ॥
पृषतो हरिणे बिन्दौ पृषतश्चाश्वरोहिते ॥
भवेत् पृषदिव श्वेते बिन्दुयुक्ते तु वाच्यवत् ॥ ११३ ॥
भरतो वाद्यभेदेऽपि दौष्यन्तौ सञ्चरे नटे ॥
रामानुजे च भरतस्तन्तुवायेऽपि च कचित् ॥ ११४ ॥
भारतं ग्रन्थभेदे स्याज्जम्बूद्वीपेऽपि भारतम् ॥
भारती तु सरस्वत्यां पक्षिणीवृत्तिभेदयोः ॥ ११५ ॥
दुर्ज्जातं व्यसने प्रोक्तमसम्यग्जातवस्तुनि ॥
परेतो भूतभेदे स्यात् परेतो वाच्यवन्मृते ॥ ११६ ॥

कपोतः पारावते स्यात् कवकाख्यविहङ्गमे ॥
कापोतमञ्जनेऽपि स्यात् कपोतानाञ्च संहतौ ॥ ११७ ॥
व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यवत् ॥
व्याघातो योगभेदे स्यादन्तरायप्रहारयोः ॥ ११८ ॥
सङ्घातः संहतौ घाते सङ्घातो नरकान्तरे ॥
रैवतस्तु सुवर्णालौ शैलभेदेऽपि शूलिनि ॥ ११९ ॥
स्यात् किरातस्तु भूनिम्बे म्लेच्छे चाल्पतनावपि ॥
मन्दाकिन्यां किराती स्यात् कुट्टिन्यामपि दृश्यते ॥१२०॥
आस्फीतश्चार्कपर्णे स्यादास्फीतः कोविदारके ॥
आस्फीता गिरिकर्ण्यां स्याद्वनमल्ल्याञ्च विश्रुता ॥१२१॥
उदात्तः स्वरभेदे स्यात् काव्यालङ्कारहृद्ययोः ॥
उदात्तो दातृमहतोर्निमित्तं हेतुलक्ष्मणोः ॥ १२२ ॥
उन्मत्त उन्मादवति धुत्तूरमुचुकुन्दयोः ॥
पर्वतः शैलदेवर्षौ प्रपातो निर्झरे भृगौ ॥ १२३ ॥
पर्याप्तन्तु यथेष्टे स्यात् तृप्तौ शक्ते निवारणे ॥
जीमूतः स्याद् धृतिकरे शक्रेऽद्रौ घोषके घने ॥ १२४ ॥
जीवातुर्जीविते भक्ते जीवातुर्जीवनौषधे ॥
एधतुः पुरुषे वह्नौ वाहेतुः पथिके वृषे ॥ १२५ ॥
विहस्तो विह्वले पण्डे पर्यस्तः पतिते हते ॥
आयस्तः स्तिमिते क्षिप्ते क्लेशिते कुपिते हते ॥ १२६ ॥
निरस्तः क्लेशितेषौ स्यान्निष्ठ्यूते त्वरितोदिते ॥
सन्त्यक्ते च प्रतिहते विश्वस्तो निभृते स्मृतः ॥ १२७ ॥
विश्वासयोगे विश्वस्तो विश्वस्ता विधवास्त्रियाम् ॥
निवातो दृढसन्नाहे वातान्ते चाश्रयेऽपि च ॥ १२८ ॥
अनन्तः शेषविष्ण्वोः स्यादनन्तः सुरवर्त्मनि ॥

अनन्तश्चाप्यनवधौ वाच्यवत् समुदाहृतः ॥ १२९ ॥
अनन्ता शारिवादूर्वाविशल्यालाङ्गलीषु च ॥
अनन्ता हैमवत्याञ्च गुडूच्याञ्च निरूप्यते ॥ १३० ॥
शकुन्तः पक्षिभेदे स्याद्भासपक्षिविहङ्गयोः ॥
दृष्टान्तः शास्त्र उभयोदाहरणे प्रकीर्त्तितः ॥ १३१ ॥
कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मसु ॥
निशान्तः कथितः शान्ते निशान्तं भवनोषसोः ॥ १३२ ॥
वृत्तान्तोऽवसरे भावकात्स्न्र्यवार्त्ताविशेषयोः ॥
वृत्तान्तः प्रक्रियायाञ्च क्वचिदेकान्तवाचकः ॥ १३३ ॥
उद्धान्तो निर्मदगजे समुद्गीर्णे च वाच्यवत् ॥
शुद्धान्तोऽन्तःपुरे राज्ञो रहःकक्षान्तरेऽपि च ॥ १३४ ॥
अस्वन्तमशुभे चुल्ल्यां मरणेऽनवधावपि ॥
क्षेत्रेऽपि कथ्यतेऽस्वन्तमुदन्तः साधुवार्त्तयोः ॥ १३५ ॥
जयन्तः शङ्करेऽपि स्याज्जयन्तः पाकशासनौ ॥
जयन्ती पादपे गौर्यामिन्द्रपुत्रीपताकयोः ॥ १३६ ॥
गोदन्तो हरिताले स्याद्दंशिते हरितेऽपि च ॥
भासन्तः सुन्दराकारे भासन्तो भासपक्षिणि ॥ १३७ ॥
महद्राज्ये विशाले च महती वल्लकीभिदि ॥
मरुद्देवे समीरे स्यादर्हन् पूज्ये जिनेऽपि च ॥ १३८ ॥
जगदाख्या स्मृता वाते विष्टपे जङ्गमेऽपि च ॥
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ॥ १३९ ॥
पित्सन पिपातिषन्नेतौ पतनेच्छुविहङ्गयोः ॥
हरित् ककुभि वर्णे च तृणवाजिविशेषयोः ॥ १४० ॥
हरितेऽपि च दूर्वायां हरिद्वर्णयुतेऽन्यवत् ॥
विद्युत् सौदामिनीसन्ध्योर्निष्प्रभे त्वभिधेयवत् ॥ १४१ ॥

गर्मुत् सुवर्णलतयो रोहित् सूर्यलताभिदोः ॥
भूभृन्नरेन्द्रे शैले च पतन् पातुकपक्षिणोः ॥ १४२ ॥
कुर्वन् कर्मकरे भृत्ये स्यादर्वन् कुक्षितेऽन्यवत् ॥
अर्वती कुम्भदास्याञ्च वाम्याञ्च परिकीर्त्तिता ॥ १४३ ॥
श्रीमांस्तिलकवृक्षे स्यान्मनोज्ञे धनकेऽपि च ।
धीमान् वाचस्पतौ धीरे भास्वान् भास्वरसूर्ययोः ॥१४४॥
सुव्रता पुङ्गसन्दोह्यसुरभ्यां शोभनव्रते ॥
वाच्यवद्विवृता क्षुद्ररोगे स्याद्विवृतं स्फुटे ॥ १४५ ॥
वनिता जनितात्यर्थानुरागायाञ्च योषिति ॥
वनितं याचितेऽपि स्याद्वनितं शोचितेऽपि च ॥ १४६ ॥
जामाता वल्लभे सूर्यावर्त्तेऽपि दुहितुः पतौ ॥
विनेता देशिके राज्ञि विधाता वेधसि स्मरे ॥ १४७ ॥
विनता पिटकाभेदे विनता तार्क्ष्यमातरि ॥
विनतः प्रणते भुग्ने शिक्षितेऽप्यभिधेयवत् ॥ १४८ ॥
पञ्चता पञ्चभावे स्यात् पञ्चता मरणेऽपि च ॥
विजाताख्या प्रसूतायां जनिते विकृतेऽपि च ॥ १४९ ॥
सिकता वालुकायां स्युः सिकताऽप्यामयान्तरे ॥
सिकतान्वितदेशे च शर्करायाञ्च कीर्त्तिता ॥ १५० ॥
वासिता करिणीनार्योर्वासितं सुरभीकृते ॥
ज्ञानमात्रे खगारावे वासितं वस्त्रवेष्टिते ॥ १५१ ॥
पिशिता मांसिकायां स्यादामिषे पिशितं मतम् ॥
तृणताऽपि तृणत्वे स्यात्तृणता कार्मुकेऽपि च ॥ १५२ ॥
द्विजातिरण्डजे विप्रे श्रीपतिः क्ष्मापतौ हरौ ॥
गोपतिः शङ्करे षण्डे पार्थिवेऽपि विकर्त्तने ॥ १५३ ॥
स्थपतिः शिल्पिभेदेऽपि स्थपतिः कञ्चुकिन्यपि ॥

जीवेष्टियाजके सूतेऽप्यमतिः कालचन्द्रयोः ॥ १५४ ॥
अङ्कतिः स्यादाग्निहोत्रे ज्वलनाम्बुजयोनिषु ॥
रमतिर्नायके स्वर्गेऽप्यहतिस्त्यागरागयोः ॥ १५५ ॥
निर्ऋतिः स्यादलक्ष्म्याञ्च दिक्पाले निरुपद्रवे ॥
अगास्तिर्वङ्गसेने स्यादगदस्तिः कुम्भसम्भवे ॥ १५६ ॥
गभस्तिः किरणे सूर्ये स्वाहायाञ्च विलोक्यते ॥
सङ्गतिः सङ्गमे ज्ञाने सन्नतिः प्रणतौ ध्वनौ ॥ १५७ ॥
आयतिः सङ्गमे दैर्घ्ये प्रभावागामिकालयोः ॥
आपत्तिः स्याद् बले स्नेहे वशित्वे वासरेऽपि च ॥१५८॥
मर्यादायां तथाऽऽपत्तिर्विपत्तिर्यातनापदोः ॥
नियतिर्नियमे दैवे पद्धतिः पङ्क्तिवर्त्मनोः ॥ १५९ ॥
सन्ततिः पङ्क्तिविस्तारगोत्रेषु कविभिः स्मृता ॥
परम्पराभवेऽपि स्यात् सन्ततिः पुत्रकन्ययोः ॥ १६० ॥
सम्मतिः स्यादनुज्ञानेऽप्यभिलाषेऽपि सम्मतिः ॥
समितिः सङ्गरे साम्ये सभायामपि सङ्गमे ॥ १६१ ॥
अदितिर्वसुधायां स्याददितिर्देवमातरि ॥
वसतिः स्यादवस्थाने यामिन्याञ्च निकेतने ॥ १६२ ॥
पक्षतिः पक्षमूले स्यात् पक्षतिः प्रतिपत्तिथौ ॥
उन्नतिस्ताक्ष्यंदारेषु समृद्धावुदयेऽपि च ॥ १६३ ॥
प्रसूतिस्तनयोत्पत्तौ तथा दुहितरि स्मृता ॥
व्रततिर्विस्तृतौ वल्ल्यां वहतिः सचिवे गवि ॥ १६४ ॥
दुर्गतिर्नरके नैःस्वे विकृतिर्डिम्बरोगयोः ॥
निकृतिर्भर्त्सने क्षेपे वदन्ति शठशाठ्ययोः ॥ १६५ ॥
आकृतिः कथितारूपसामान्यवपुषोरपि ॥
प्रकृतिः सहजे योनावमात्ये परमात्मनि ॥ १६६ ॥

निर्वृत्तिः स्वस्थतायां स्याद्स्तङ्गमनसौख्ययोः ॥
सुनीतिः शोभननये सुनीतिर्ध्रुवमातरि ॥ १६७ ॥
प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपि ॥
विच्छित्तिरङ्गरागे स्याद्भावाविच्छेदयोरपि ॥ १६८ ॥
संवित्तिः प्रतिपत्तौ स्यादाविवादे जनस्य च ॥
आपत्तिः प्रापणे दोषे चासत्तिः सङ्गलाभयोः ॥ १६९ ॥
पर्याप्तिः स्यात् प्रकामेऽपि प्राप्तौ च परिरक्षणे ॥
समाप्तिश्चावसाने स्यात् समाप्तिश्च समर्थने ॥ १७० ॥
बृहती क्षुद्रवार्त्ताक्यां कण्टकार्यांश्च वाचि च ॥
वारिधान्यां महत्याश्च छन्दोवसनभेदयोः ॥ १७१ ॥
मालती जातियुवतीज्योत्स्नासु सरिदन्तरे ॥
काकमाच्यां विशालायां विभावर्यामपीष्यते ॥ १७२ ॥
भवती बाणभेदे स्यादन्यवद् वत्सदर्थयोः ॥
रेवती हलिपत्न्यां स्यात् ताराभेदेऽपि मातृषु ॥ १७३ ॥
पार्वती शल्लकीदुर्गाद्रोपदीजीविनीषु च ॥
स्रवन्ती च द्रवन्ती च सरिदोषधिभेदयोः ॥ १७४ ॥
जीवन्ती जीविनीशम्योर्गुडूचीवृन्दयोरपि ॥
हसन्त्यङ्गारधान्याश्च मल्लिकाशाकिनीभिदोः ॥ १७५ ॥
वासन्ती माधवीयूथ्योः पाटलायां क्रमेलके ॥
वासन्ती कोकिलेऽपि स्याद्वासन्तोऽविहिते विटे ॥ १७६ ॥

तचतुष्कम् ॥

भवेदवसितं ज्ञाते गतौ रुद्धावसानयोः ॥
अवदातं सिते पीते विशुद्धे प्रवरेऽपि च ॥ १७७ ॥
अवगीतन्तु निर्वादे मुहुर्दृष्टे विगर्हिते ॥
अन्तर्गतं विस्मृते स्यान्मध्यप्राप्ते च कथ्यते ॥ १७८ ॥

अङ्गारितं पलाशीयकलिकोद्गमदग्धयोः ॥
अपावृतः स्वतन्त्रे स्यात् पिहिते चाऽप्यपावृतः ॥ १७९ ॥
अत्याहितं महाभीतौ जीवनोपेक्षकर्मणि ॥
उपाहितोऽनलोत्पात आहिते चाप्युपाहितः ॥ १८० ॥
उपाकृतोऽध्वरहतपशूपद्रुतयोर्मतः ॥
उदास्थितः प्रतीहारेऽध्यक्षे च प्रणिधौ चरे ॥ १८१ ॥
अभिनीतो भवेन्न्याय्ये संस्कृतामर्षिणोरपि ॥
अभिजातः स्मृतो न्याय्ये कुलीनप्राप्तरूपयोः ॥ १८२ ॥
पारिजातः सुरतरौ मन्दारे पारिभद्रके ॥
भवेत्परिगतं लाभे प्रयाते वेष्टितेऽपि च ॥ १८३ ॥
ख्यातं प्रणिहितं लब्धे विन्यस्ते च समाहिते ॥
भवेत् प्रतिहितोऽद्विष्टे प्रतिस्खलितरुद्धयोः ॥ १८४ ॥
उल्लिखितं समुत्कीर्णे वाच्यवच्च तनूकृते ॥
विद्यादुपचितं दिग्धे समृद्धे च समाहिते ॥ १८५ ॥
समुद्धतः समुद्गीर्णेऽप्यविनीते समुद्धतः ॥
कुहरितं पिकालापे रटिते रतनिस्वने ॥ १८६ ॥
भवेत् पल्लवितं लाक्षारक्ते सप्रसवे तते ॥
उज्जृम्भितन्तु चेष्टायामुत्फुल्ले चाभिधेयवत् ॥ १८७ ॥
उद्ग्राहितमुपन्यस्ते बद्धग्राहितयोरपि ॥
निस्तुषितं निस्त्वचि स्याद्वर्ज्जिते च लघूकृते ॥ १८८ ॥
ऐरावतोऽभ्रमातङ्गनारङ्गलिकुचाहिषु ॥
ऐरावतं महेन्द्रस्य ऋजुदीर्घशरासने ॥ १८९ ॥
ऐरावती स्यात्ताडिति सरिद्भेदेऽपि लक्ष्यते ॥
कलधौतं रूप्यहेम्नोः कलधौतं कलध्वनौ ॥ १९० ॥
दिवाभीतः कुम्भिले स्यादुलूके कुमुदाकरे ॥

पाशुपतो वकपुष्पे पशुपत्याधिदैवते ॥ १९१ ॥
निष्कासितो निर्गमितेऽप्यूहिते धिक्कृतेऽपि च ॥
व्यतीपातो महोत्पाते योगभेदापयानयोः ॥ १९२ ॥
समाघातो वधे युद्धे परिघातोऽस्त्रघातयोः ॥
विनिपातोऽवपाते स्याद्दैवादिव्यसनेऽपि च ॥ १९३ ॥
समाहितः प्रतिज्ञाते समाधिस्थे यतात्मनि ॥
वाच्यवन्निहिते सिद्धे समाधाने समाहितम् ॥ १९४ ॥
नन्द्यावर्त्तः स्मृतो वेश्मप्रभेदे तगरद्रुमे ॥
परिवर्त्तो विनिमये कूर्मराजे पलायने ॥ १९५ ॥
अभियुक्तः परै रुद्धे तथा स्यादातितत्परे ॥
अतिमुक्तस्तु वासन्त्यां तिनिशे निष्कलेऽपि च ॥ १९६ ॥
उपरक्तः सैंहिकेये तद्ग्रहे व्यसनाकुरे ॥
सूर्य्यभक्तो बन्धुजीवे तथा भास्करपूजके ॥ १९७ ॥
नदीकान्तः समुद्रे स्यात् सिन्दुवारेऽपि हिज्जले ॥
नदीकान्ता स्मृता जम्बूकाकजङ्घालतासु च ॥ १९८ ॥
नागदन्तो द्विपरदे गृहान्निर्गतदारुणि ॥
नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपीष्यते ॥ १९९ ॥
पुष्पदन्तस्तु दिङ्नागे नागविद्याधरान्तरे ॥
चन्द्रकान्तोऽश्मभेदे स्याच्चन्द्रकान्तश्च कैरवे ॥ २०० ॥
वैजयन्तो गृहे शक्रप्रासादध्वजयोरपि ॥
वैजयन्ती पताकायां जयन्तीवह्निमन्थयोः ॥ २०१ ॥
पुरस्कृतं स्वीकृताभिशस्तयोऽरभिधेयवत् ॥
अग्रे कृताभ्यर्च्चितयोः सिक्ते चापि पुरस्कृतम् ॥ २०२ ॥
अवध्वस्तं परित्यक्ते निन्दितेऽप्यवचूर्णिते ॥
धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः ॥ २०३ ॥

चित्रगुप्तः कृतान्ते स्याल्लेखके चास्य सम्मतः ॥
पञ्चगुप्तस्तु चार्वाकदर्शने कमठेऽपि च ॥ २०४ ॥
अधिक्षिप्तः प्रणिहिते तथा निर्भर्त्सितेऽपि च ॥
प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते ॥ २०५ ॥
आयुष्मान् योगभेदे स्यादायुष्मांश्चिरजीविनि ॥
विवस्वान् विबुधे भानौ भगवान् बुद्धपूज्ययोः ॥ २०६ ॥
द्वीपवान् सिन्धुनदयोर्द्वीपवत्यापगाभुवोः ॥
गरुत्मान् विहगे तार्क्ष्ये सङ्ख्यावान् पण्डिते मिते ॥ २०७ ॥
अंशुमान् भास्करे शालपर्ण्यामंशुमती मता ॥
अर्थपतिः कुबेरे स्यादीश्वरेऽर्थपतिस्तथा ॥ २०८ ॥
गृहपतिर्गृहस्थे स्यादत्याधाने च सत्रिणि ॥
सेनापतिः कार्त्तिकेयेऽप्यनीकाधिकृतेऽपि च ॥ २०९ ॥
लक्ष्मीपतिर्वासुदेवे लवङ्गद्रुमपूगयोः ॥
प्रजापतिर्विधौ भूपे हिमारातिः खगेऽनले ॥ २१० ॥
वनस्पतिर्वृक्षमात्रे विना पुष्पं फलद्रुमे ॥
सदागतिः स्यात् पवने निर्वाणे च सदीश्वरे ॥ २११ ॥
दिवाकीर्त्तिस्तु चाण्डाले नापितोलूकयोरपि ॥
शतधृतिर्धातरीऽन्द्रे सुधासूतिर्मखे विधौ ॥ २१२ ॥
भवेदपचितिः पूजाक्षयहानिषु निष्कृतौ ॥
अनुमतिः स्यादूनेन्दुपूर्णिमाऽनुज्ञयोरपि ॥ २१३ ॥
प्रतिकृतिः प्रतीकारे प्रतिमायाश्च पूजने ॥
निराकृतिः प्रतिक्षेपेऽप्यस्वाध्यायेऽप्यनाकृतौ ॥ २१४ ॥
प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च ॥
प्रागल्भ्ये च प्रबोधे च प्रतिपत्तिः प्रयुज्यते ॥ ११५ ॥
उपसत्तिः सङ्गमे च सेवायां प्रतिपादने ॥

अभिशस्तिः स्मृता लोकापवादे प्रार्थनेऽपि च ॥ २१६ ॥
पारावती गोपगीतिलवलीलतयोर्मता ॥
पारावतः कलरवे शैले मर्कटतिन्दुके ॥ २१७ ॥
भोगवती भुजङ्गानां नगरीसरितोरपि ॥
गन्धवती सुराभूम्योः पुरीयोजनगन्धयोः ॥ २१८ ॥
हैमवत्यऽभयास्वर्णक्षीर्योः श्वेतवचोमयोः ॥
चर्म्मण्वती नदीभेदे कदलीपादपेऽपि च ॥ २१९ ॥
कुमुद्वती कुमुदिन्यां कुशपत्न्यां कुमुद्वती ॥
शुभ्रदन्ती सुदन्त्यां स्यात् पुष्पदन्तेभयोषिति ॥ २२० ॥
सरस्वती सरिद्भेदे गोवाग्देवतयोर्गिरि ॥
स्त्रीरत्ने चापगायाश्च सरस्वान् सिन्धुकेऽम्बुधौ ॥ २२१ ॥
रागमाताऽपि कुट्टन्यां स्मृता भूमिरुहामये ॥
प्रभूमिता क्लेशितायां सूर्यगन्तव्यदिश्यऽपि ॥ २२२ ॥
प्रव्रजिता तपस्विन्यां मुण्डीर्यामांसिकौषधौ ॥
ऋष्यप्रोक्ता शतावर्य्यां शूकशिम्ब्यां बलाभिदि ॥ २२३ ॥
कृष्णवृन्ता पाटलायां माषपर्ण्याश्च भाविता ॥
समुद्रान्ता तु कार्पासीस्पृक्कादुरालभासु च ॥ २२४ ॥

तपञ्चकम् ॥

स्यादऽवलोकितो बुद्धे प्रक्षिप्ते त्वाविलोकितम् ॥
उपधूपित आसन्नमरणे परिधूपिते ॥ २२५ ॥
स्यादऽपराजितो विष्णौ श्रीकण्ठे चाऽपराजिता ॥
श्वेताजयन्तीदुर्गास्वऽनिर्ज्जिते त्वऽभिधेयवत् ॥ २२६ ॥
गणाधिपतिर्विख्यातः शङ्करेऽपि गजानने ॥
यादसाम्पतिरम्भोधौ प्रतीचीदिक्पतावपि ॥ २२७ ॥
स्यात् पृथिवीपतिर्भूपे ऋषभाख्यौषधेऽपि च ॥

मूर्द्धाभिषिक्तो भूपाले प्रधाने क्षत्रियेऽपि च ॥ २२८ ॥
वसन्तदूतश्चूते स्यात् पिकपञ्चमरागयोः ॥
वसन्तदूती पाटल्यां प्रतीच्यामतिमुक्तके ॥ २२९ ॥

तषट्कम् ॥

अर्द्धपारावतश्चित्रकण्ठे तित्तिरपक्षिणि ॥

तसप्तकम् ॥

समुद्रनवनीताख्या पीयूषामृतरश्मिषोः ॥ २३० ॥

इति तान्तवर्गः ॥

—:०:—

थद्विकम् ॥

रथः स्यात् स्यन्दने काये चरणे वेतसेऽपि च ॥
कुथः प्रवेणीकुशयोः पीथोऽर्के पीथमम्भसि ॥ १ ॥
कोथस्तु शठिते नेत्ररुग्भेदे मन्थनेऽपि च ॥
प्रोथोऽध्वगेऽश्वघोणायां कटीस्त्रीगर्भयोरपि ॥ २ ॥
क्काथः स्याद् द्रवनिष्पाके दुःखव्यसनयोरपि ॥
सिक्थं नील्यां मधूच्छिष्टे सिक्थ ओदनसम्भवे ॥ ३ ॥
पृथुर्नृपे कृष्णजीरे वाप्यां पृथु महत्यपि ॥
दुःस्थः स्याद् दुर्गते मूर्खे प्रस्थः शिखरमानयोः ॥ ४ ॥
तुत्थोऽग्नावञ्जने तुत्था नीलीसूक्ष्मैलयोरपि ॥
मन्थः साक्तवमन्थाननेत्रामयदिवाकरे ॥ ५ ॥
ग्रन्थो धने स्यात् सन्दर्भे द्वात्रिंशद्वर्णनिर्म्मितौ ॥
ग्रन्थिः पर्वणि कौटिल्ये ग्रन्थिपर्णे गदान्तरे ॥ ६ ॥
अर्थः प्रकारे विषये वित्तकारणवस्तुषु ॥
अभिधेयेऽपि शब्दानां निवृत्तौ च प्रयोजने ॥ ७ ॥
तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ॥

अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम् ॥ ८ ॥
सार्थो वणिक्समूहे स्यादऽपि सङ्घातमात्रके ॥
पार्थस्तु ककुभे जिष्णौ गाथावाग्भेदवृत्तयोः ॥ ९ ॥
कन्था मृन्मयाभित्तौ स्यात् कन्था प्रावरणान्तरे ॥
आस्था चाऽलम्बनास्थानयत्नापेक्षासु कथ्यते ॥ १० ॥
संस्था स्थितौ चरे नाशे व्यक्तिसादृश्ययोरपि ॥
वीथी गृहाङ्गे पङ्क्तौ च नाट्यरूपकवर्त्मनोः ॥ ११ ॥
यूथी पुष्पप्रभेदे स्यान्मागध्याश्च कुरण्टके ॥
यूथं तिर्यक्समूहे स्याद्वृन्दमात्रे च भाषितम् ॥ १२ ॥

थत्रिकम् ॥

मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे ॥
उन्माथः कूटयन्त्रे स्यान्मारणे घातकेऽपि च ॥ १३ ॥
प्रमथोऽपि गणे प्रोक्तः पथ्यायां प्रमथा भवे ॥
निशीथोऽप्यर्द्धरात्रे स्यान्निशीथो रात्रिमात्रके ॥ १४ ॥
विदिथो योगिकृतिनोरुद्रथः शुनिकुक्कुटे ॥
शमथः सचिवे शान्तौ दमथो दमदण्डयोः ॥ १५ ॥
वरूथो रथगुप्तौ स्याद्वरूथं चर्मवेश्मनोः ॥
अतिथिः कुशपुत्रेऽपि कोपे प्राघुणकेऽपि च ॥ १६ ॥
वमथुर्वमनेऽपि स्याद् गजस्य करशीकरे ॥
क्षवथुः कथितः काशे हिक्कायामपि दृश्यते ॥ १७ ॥
समर्थोऽपि हिते शक्ते सम्बद्धार्थेऽपि सम्मतः ॥
सिद्धार्थः शाक्यसिंहे स्यात् सिद्धार्थः सितसर्षपे ॥ १८ ॥
कायस्थोऽपि नृजातेः स्यात् प्रभेदे परमात्मनि ॥
कायस्था तु हरीतक्यामामलक्याश्च दर्शिता ॥ १९ ॥
वयःस्थो वाच्यवद्यूनि वयःस्था शाल्मलीद्रुमे ॥

ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीषु च ॥ २० ॥
अश्वत्थो गर्दभाण्डे स्यात् पिप्पले पूर्णिमातिथौ ॥
उपस्थो मेढ्र उत्सङ्गे भगे पायौ च कथ्यते ॥ २१ ॥
निर्ग्रन्थो नग्नकेऽपि स्यान्निःस्वबालिशयोरपि ॥
गोग्रन्थिस्तु करीषे स्याद् गोष्ठे गोजिह्विकौषधे ॥ २२ ॥
अव्यथा तु हरीतक्यां पन्नगे निर्व्यथेऽपि च ॥
षड्ग्रन्थाऽपि वचासिंह्योः षड्ग्रन्थोऽपि प्रकीर्त्यते ॥ २३ ॥

थचतुष्कम् ॥

चित्ररथः स्याद्गन्धर्वे रवौ विद्याधरान्तरे ॥
चतुष्पथश्चतुर्मार्गसङ्गमेऽपि द्विजेऽपि च ॥ २४ ॥
वानप्रस्थो मधूके स्यात् किंशुके चाश्रमान्तरे ॥
दशमीस्थं नष्टबीजे स्थविरेऽपि प्रचक्ष्यते ॥ २५ ॥
अनीकस्थो रणस्थले गजशिक्षाविचक्षणे ॥
राजरक्षिषु चिह्ने च वीरमर्दनकेऽपि च ॥ २६ ॥
भवेदितिकथा नष्टधर्मेऽपार्थे वचस्यऽपि ॥
अश्रद्धेयेऽप्युदराथिः समुद्रे च वियन्मणौ ॥ २७ ॥

इति थान्तवर्गः

—:०:—

दद्विकम् ॥

गदो भ्रातरि विष्णोः स्यादामयेऽप्यायुधे गदा ॥
नदः समुद्रे निनदे नदी तु सरिति स्मृता ॥ १ ॥
मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः ॥
मद्येऽपि मद आख्यातो मदी कृषकवस्तुनि ॥ २ ॥
पदं शब्दे च वाक्यं च व्यवसायापदेशयोः ॥
पादपाच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः ॥ ३ ॥

छदः पलाशे गरुति ग्रन्थिपर्णितमालयोः ॥
रदो विलेखने दन्ते भद्रं कल्याणशर्म्मणोः ॥ ४ ॥
भेदो द्वैधे विशेषे स्यादुपजापे विदारणे ॥
स्वेदस्तु स्वेदने घर्म्मे शादः कर्द्दमशस्ययोः ॥ ५ ॥
पादो ब्रध्ने तुरीयांशे शैलमत्यन्तपर्वते ॥
चरणे च मयूखे च क्षोदो रजसि पेषणे ॥ ६ ॥
सूदस्तु सूपवत् सूपकारे च व्यञ्जनेऽपि च ॥
स्वादुर्मनोज्ञे मृष्टे च मृदुः स्यात् कोमलेऽखरे ॥ ७ ॥
अब्दः संवत्सरे मेघे गिरिभेदे च मुस्तके ॥
विन्दुर्दन्तच्छदेऽपि स्यात्तथा वेदितृविप्रुषोः ॥ ८ ॥
कुन्दश्चक्रभ्रमौ माघ्ये निधिभेदे मुरद्विषि ॥
कन्दस्तु शूरणे शस्यमूले जलधरेऽपि च ॥ ९ ॥
मन्दः खले मन्दरते मूर्खे स्वैरेऽल्परागिणोः ॥
अभाग्येऽपि च मातङ्गे गजजातिप्रभेदयोः ॥ १० ॥
छन्दो वशेऽप्यभिप्राये हृदाख्याचित्तबुक्कयोः ॥
वेदिरङ्गुलमुद्रायां बुधेऽलङ्कृतभूतले ॥ ११ ॥
अन्दुः स्याद् बन्धनद्रव्ये प्रभेदे भूषणस्य च ॥
नन्दिरानन्दने द्यूते प्रतीहारे हरस्य च ॥ १२ ॥
विदा ज्ञाने च बुद्धौ च धीदा कन्यामनीषयोः ॥
निन्दाऽपवादे कुत्सायां नन्दा मणिकसम्पदोः ॥ १३ ॥

दत्रिकम् ॥

धनदो दातरि श्रीदे जलदो मुस्तकेऽम्बुदे ॥
नलदं स्यात्पुष्परसे मांसिकोशीरयोरपि ॥ १४ ॥
प्रमदः सम्पदे मत्ते कामिन्यां प्रमदा मता ॥
विशदः पाण्डुरे व्यक्ते जीवदो वैद्यविद्विषोः ॥ १५ ॥

अङ्गदः कपिभेदे स्यात् केयूरेऽङ्गदमिष्यते ॥
अङ्गदा याम्यदिग्दन्तिहस्तिन्यां समुदाहृता ॥ १६ ॥
वरदोऽपि प्रसन्ने स्याद्वरदः शान्तचेतसि ॥
वरदाऽपि च कन्यायामामोदो गन्धहर्षयोः ॥ १७ ॥
नर्मदः केलिसचिवे नर्मदा सरिदन्तरे ।
क्षणदो गणके रात्रौ क्षणदा क्षणदञ्जले ॥ १८ ॥
कपर्दः खण्डपरशोर्जटाजूटे वराटके ॥
आस्पदन्तु पदे कृत्ये निषादः श्वपचे स्वरे ॥ १९ ॥
प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसक्तिषु ॥
प्रसादः कथ्यते देवनरदेवनिवासयोः ॥ २० ॥
शारदः पीतमुद्गे स्याच्छालीने प्रतिभे नवे ॥
वर्षेऽथ जलपिप्पल्यां सप्तपर्णे च शारदि ॥ २१ ॥
दारदो विषभेदे स्याद्धिङ्गुले पारदेऽपि च ॥
तोयदन्तु घृते प्रोक्तं तोयदो मुस्तकाब्दयोः ॥ २२ ॥
निर्वादः स्यात् परीवादपरिनिष्ठितवादयोः ॥
अर्बुदो मांसकीले स्याद्दशकोटिषु चाऽर्बुदः ॥ २३ ॥
शैलेऽर्बुदोऽथ सम्भेदः स्फुटने सिन्धुसङ्गमे ॥
कुसीदं जीवने वृद्ध्या कुसीदश्च कुसीदिके ॥ २४ ॥
प्रणादस्तारशब्दे स्यात् प्रणादः श्रवणामये ॥
प्रह्लादः प्रमदे दैत्ये दायादे ज्ञातिपुत्रयोः ॥ २५ ॥
मेनादः कोकिमार्ज्जारच्छागलेषु समीरितः ॥
गोविन्दो वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ ॥ २६ ॥
आक्रन्दो दारुणरणे मित्रे त्रातरि रोदने ॥
माकन्दः सहकारे स्यान्माकन्द्यामलकीफले ॥ २७ ॥
अर्द्धेन्दुश्चन्द्रशकले गलहस्तनखाङ्कयोः ॥

अर्द्धेन्दुः स्यादतिप्रौढे स्त्रीगुह्याङ्गुलियोजने ॥ २८ ॥
कर्णेन्दुरुक्तिक्षिप्तिकायां कर्णपाश्यामपीरिता ॥
स्यात् कौमुदः कार्त्तिकिके चन्द्रिकायाश्च कौमुदी ॥ २९ ॥
कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ ॥
दैत्यान्तरे च दिङ्नागनागयोरपि कीर्त्तितः ॥ ३० ॥
कुमुदा कुम्भिगाम्भार्योः स्यात् कुमुत् कृपणेऽन्यवत् ॥
कुमुदेऽपि कुमुत् प्रोक्तं क्रव्यां मांसाशिरक्षसोः ॥ ३१ ॥
ककुद्मत् ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि ॥
मुकुन्दः पुण्डरीकाक्षे रत्नभेदे च पारदे ॥ ३२ ॥
दरत् प्रपातेऽद्रिभवे शरत् संवत्सरे ऋतौ ॥
दृषत् पेषणपट्टे स्याद् दृशत्पाषाणमात्रके ॥ ३३ ॥
सम्पद्भूतौ गुणोत्कर्षे हारभेदेऽपि दृश्यते ॥
भासत् प्रभास्वरे मासे तरत् कारण्डवे प्लवे ॥ ३४ ॥
संविज्ज्ञाने प्रतिज्ञायां सङ्केताचारनामसु ॥
सम्भाषणे तोषणेऽपि क्रियाकारे च सङ्गरे ॥ ३५ ॥
कामदा धेनुकायां स्याद्वाच्यवत् कामदोग्धरि ॥
सुनन्दा रोचनानार्योर्मर्यादाधारणे स्थिता ॥ ३६ ॥

दचतुष्कम् ॥

एकपदं स्यात्तत्काले पदव्यामेकपद्यऽपि ॥
चतुष्पदं स्यात् स्वीकारे गवाश्वादिपशुष्वऽपि ॥ ३७ ॥
भवेद्विष्णुपदाभिख्या क्षीरोदे गगनेऽम्बुजे ॥
प्रोक्ता विष्णुपदी गङ्गासंक्रान्तिद्वारकासु च ॥ ३८ ॥
भवेज्जनपदो देशे जने जानपदोऽपि च ॥
प्रियंवदः खेचरे स्यात् प्रियवाचिषु वाच्यवत् ॥ ३९ ॥
अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि ॥

परिवादः कलङ्के स्याद्वीणावादनवस्तुनि ॥ ४० ॥
समर्यादः समीपे स्यान्मर्यादासहितेऽपि च ॥
पुटभेदो नदीवक्त्रे पतनातोद्ययोरपि ॥ ४१ ॥
अष्टापदं स्यात् कनके शारीणां फलकेऽपि च ॥
अष्टापदश्च शरभे चन्द्रमल्याश्च मर्कटे ॥ ४२ ॥
मेघनादस्तु वरुणे रावणस्य सुतेऽपि च ॥
महानादः कुञ्जरे स्याद्दर्षुकाब्जे शयानके ॥ ४३ ॥
भवेत् कोकनदं रक्तकैरवे रक्तपङ्कजे ॥
विशारदो बुधे धृष्टेऽभिमर्दो रणमन्थयोः ॥ ४४ ॥
पीठमर्दोऽतिधृष्टे स्यान्नाट्योक्तौ नायकप्रिये ॥
मुचुकुन्दो द्रुभेदे स्यान्मुनिदैत्यविशेषयोः ॥ ४५ ॥
कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः ॥
हिङ्गुले पद्मरागे स्यान्मुकुरे च समीरितः ॥ ४६ ॥
अभिष्यन्दोऽतिवृद्धौ स्यादास्रावेऽक्षिगदेऽपि च ॥
कटुकन्दं विदुः शिग्रौ शृङ्गवेररसोनयोः ॥ ४७ ॥
तमोनुदऽग्नीन्द्वर्केषु प्रतिपत्तिथिसंविदोः ॥
शतह्रदा भवेद्वज्रे सौदामिन्याश्च कीर्त्तिता ॥ ४८ ॥

दपञ्चकम् ॥

सहस्रपादः कारण्डे मार्तण्डे यज्ञपूरुषे ॥
भवेदुपनिषद्धर्म्मे वेदान्तेऽपि रहस्यऽपि ॥ ४९ ॥

इति दान्तवर्गः ॥

—:०:—

धद्विकम् ॥

राधो वैशाखमासे स्याद्राधा गोप्याश्च विद्युति ॥
विष्णुक्रान्तामलक्योश्च चित्रवेधे च धन्विनाम् ॥ १ ॥

गाधः स्थाने च लिप्सायां व्याधो मृगयुदुष्टयोः ॥
मेधः क्रतुर्धियां मेधा मेधः स्यात् खलदारुणे ॥ २ ॥
बुधः कवौ रौहिणेये मिद्धमालस्यनिद्रयोः ॥
तथा चित्ताभिसंक्षेपे नद्धमुद्वृत्तबद्धयोः ॥ ३ ॥
सिद्धो व्यासादिषु ख्यातः सिद्धाः स्युर्देवयोनिषु ॥
नित्ये प्रसिद्धे निष्पन्नेऽपीद्धमातप्तदीप्तयोः ॥ ४ ॥
ऋद्धं त्वतिसमृद्धे स्यात् सम्यग्वाते तु वाच्यवत् ॥
वृद्धन्तु शैलजे सूरिजीर्णरूढेषु भेद्यवत् ॥ ५ ॥
विद्धं स्याद्वेदिते क्षिप्ते सादृश्येऽपि निगद्यते ॥
बुद्धो जिने च धीरे च सौम्ये च बुधितेऽपि च ॥ ६ ॥
अर्द्धः खण्डे समांशेऽर्द्धं लुब्धो मृगयुकाङ्क्षिणोः ॥
अन्धं स्यात्तिमिरे दृष्टिहीनेऽन्धः समुदाहृतः ॥ ७ ॥
गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः ॥
स्कन्धः प्रकाण्डे सैन्यांशे बाहुमूलसमूहयोः ॥ ८ ॥
समीकनृपयोश्चाऽपि बन्धस्त्वाधौ च बन्धने ॥
दग्धं प्लुष्टेऽन्यवद्दग्धा स्थितार्कदिशि दर्शिता ॥ ९ ॥
दिग्धं विषाक्तबाणे स्याद्दिग्धं लिप्तार्थकेऽन्यवत् ॥
दुग्धं प्रपूरणे क्षीरे मुग्धः सुन्दरमूढयोः ॥ १० ॥
मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः ॥
दैत्ये चैत्रे वसन्ते च जीवाशाके मधुद्रुमे ॥ ११ ॥
विधुः शशाङ्के कर्पूरे हृषीकेशेऽपि राक्षसे ॥
साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत् ॥ १२ ॥
सिन्धुः समुद्रे नद्याञ्च नदे देशेभदानयोः
बन्धुर्बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे ॥ १३ ॥
आधिर्मानसपीडायां प्रत्याशायाञ्च बन्धके ॥

व्यसने चापधिष्ठाने व्याधिरामयवाक्ययोः ॥ १४ ॥
बोधिः समाधिभेदे स्याद्बोधिः पिप्पलपादपे ॥
सन्धिर्भेदे सुरुङ्गायां भगे सङ्घटनेऽपि च ॥ १५ ॥
अब्धिः समुद्रे सरसि सिद्धिर्निष्पत्तियोगयोः ॥
वृद्धिरानन्दने ऋद्धौ वर्द्धनेऽपि कलान्तरे ॥ १६ ॥
दोग्धा गोपालके वत्से कवौ वार्त्तोपजीविनि ॥
विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ ॥ १७ ॥
गोधा तले निहाकायां बाधा दुःखनिषेधयोः ॥
सुधाऽमृते स्नुहीमूर्वालेपगाङ्गेष्टिकासु च ॥ १८ ॥
सन्धा स्थितौ प्रतिज्ञायां श्रद्धा श्राद्धत्वकाङ्क्षयोः ॥
स्पर्द्धा संघर्षणे साम्ये स्पर्द्धा क्रमसमुन्नतौ ॥ १९ ॥
वधूः स्नुषानवोढास्त्रीभार्यास्पृक्काङ्गनासु च ॥
शट्याश्च शारिबायां स्यात् सृधूर्बुद्धौ गुदेऽपि च ॥ २० ॥

धत्रिकम् ॥

विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः ॥
विबुधः पण्डिते देव सम्बाधः सङ्कटे भगे ॥ २१ ॥
निषधः कठिने देशे तद्राजे च नगान्तरे ॥
संरोधो रोधने क्षेपे निरोधो रोधनाशयोः ॥ २२ ॥
उत्सेधश्चोच्छ्रये काये दुर्विधो दुर्गते खले ॥
विश्रब्धोऽनुद्धटेऽत्यर्थे ज्ञातविश्वस्तयोरपि ॥ २३ ॥
न्यग्रोधी व्यामवटयोर्न्यग्रोधश्च शमीतरौ ॥
न्यग्रोधे वृषपर्ण्याश्च मोहनाख्यौषधावपि ॥ २४ ॥
अगाधो विवरे स्थाने प्रसिद्धोऽलङ्कृतेऽपि च ॥
विख्यातेऽपि च सन्नद्धे वर्मितव्यूढयोरपि ॥ २५ ॥
आनद्धं बद्धमात्रे स्यादानद्धं मुरुजादिके ॥

आविद्धो वाच्यवज्ज्ञेयः कुटिले च पराहते ॥ २६ ॥
कबन्धस्तूदरे रक्षोविशेषेऽपि विधुन्तुदे ॥
आबन्धो दृढबन्धे स्यात् प्रेमालङ्कारयोरपि ॥ २७ ॥
सुगन्धिः स्यादिष्टगन्धे सुगन्धि हरिवालुके ॥
उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे ॥ २८ ॥
कुटुम्बव्यापृतेऽपि स्यादुपाधिर्व्याधिचक्रयोः ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ॥ २९ ॥
अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेऽपि च ॥
समाधिर्नियमे ध्याने नीवाके च समर्थने ॥ ३० ॥
सन्निधिः सन्निधानेऽपि भवेदिन्द्रियगोचरे ॥
संसिद्धिः सहजे सिद्धौ मदोग्रायामपि स्मृता ॥ ३१ ॥
प्रणिधिश्चरे याच्ञायां वीरुद्विटपशाखयोः ॥
मागधी पिप्पलीयूथ्योर्मागधो मगधोद्भवे ॥ ३२ ॥
वैश्यजक्षत्रियापुत्रे शुक्लजीरकवन्दिनोः ॥

धचतुष्कम् ॥

अवरोधस्तिरोधाने शुद्धान्ते राजवेश्मनि ॥ ३३ ॥
महौषधं शृङ्गवेरे विषायां लशुनेऽपि च ॥
परिव्याधो वेतसे स्यात् परिव्याधो द्रुमोत्पले ॥ ३४ ॥
अवष्टब्धमदूरे स्यादाक्रान्ते च विलम्बिते ॥
समुन्नद्धः समुद्भूते पण्डितम्मन्यधृष्टयोः ॥ ३५ ॥
अनिरुद्ध उषानाथे चरे चानर्गलेऽन्यवत् ॥
अनुबन्धः प्रकृत्यादेर्दोषोत्पादे विनश्वरे ॥ ३६ ॥
मुख्यानुयायिनि शिशौ प्रवृत्तस्य निवर्त्तने ॥
अनुबन्धी च हिक्कायां तृष्णायामपि कथ्यते ॥ ३७ ॥
कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे ॥

आशाबन्धः समाश्वासे तथा मर्कटजालके ॥ ३८ ॥
ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम् ॥
उग्रगन्धाजमोदायां वचायां छिक्कौषधौ ॥ ३९ ॥
तीक्ष्णगन्धा वचायाश्च शिग्रुराजिकयोरपि ॥
इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे ॥ ४० ॥
तृणगोधा चित्रकोले कृकलासे च लक्ष्यते ॥
उपलब्धिर्मतौ प्राप्तौ ज्ञाने चाऽपि प्रयुज्यते ॥

धपञ्चकम् ॥

योजनगन्धा कस्तूर्यां सीतायां व्यासमातरि ॥ ४१ ॥

इति धान्तवर्गः ॥

---

नद्विकम् ॥

इनः सूर्ये नृपे पत्यौ धनं गोधनवित्तयोः ॥
जिनः स्यादतिवृद्धे च बुद्धे चार्हति जित्वरे ॥ १ ॥
जनो लोके महर्लोकात् परलोके च पामरे ॥
जनी सीमन्तिनीवध्वोरुत्पत्तौ च जनिर्मता ॥ २ ॥
घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः ॥
घनं सान्द्रे दृढे दार्ढ्ये विस्तारे लोहमुद्गरे ॥ ३ ॥
मेघमुस्तकयोश्चाऽपि वनं कानननीरयोः ॥
प्रवासे निलये चाऽपि वनं प्रस्रवणेऽपि च ॥ ४ ॥
वानं शुष्कफले शुष्के कटे सीवनकर्मणि ॥
जलसंस्रववातोर्मिसुरङ्गागतिसौरभे ॥ ५ ॥
दानं गजमदे त्यागे पालनच्छेदशुद्धिषु ॥
मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे ॥ ६ ॥
यानं गतौ वाहनेऽपि पानं पीतौ च रक्षणे ॥

स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि ॥ ७ ॥
स्थानं स्थितौ च सादृश्ये सन्निवेशावकाशयोः ॥
युक्तार्थे करणार्थे च स्थाने स्यादव्ययं पुनः ॥ ८ ॥
सूनं वाच्यवदूनेषु सूनं प्रसवपुष्पयोः ॥
सूना पुत्र्यां वधस्थानगलशुण्डिकयोरपि ॥ ९ ॥
ऊनं हीने रणोद्याने स्यूनः किरणसूर्ययोः ॥
मीनो राश्यन्तरे मत्स्ये सीनोऽजगरमूर्खयोः ॥ १० ॥
चीनो मृगान्तरे तन्तुव्रीहिदेशांशुकान्तरे ॥
हीनं गर्ह्योनयोर्न्यूनमनयोरपि कीर्त्तितम् ॥ ११ ॥
कृत्स्नं कष्टे समस्ते च रस्नस्तक्षकचण्डयोः ॥
वस्नं स्याद्वेतने मूल्ये वसनद्रव्ययोरपि ॥ १२ ॥
स्वप्नः सुप्तस्य विज्ञाने स्वप्नः स्वापे च दर्शने ॥
बुध्नः शिफायां रुद्रे च रत्नं श्रेष्ठे मणावपि ॥ १३ ॥
नग्नोऽपि च क्षपणके विवस्त्रे चाऽभिधेयवत् ॥
लग्नं राश्युदये लग्नं सक्तलज्जितयोरपि ॥ १४ ॥
छन्नं रहश्छादितयोः स्यादन्नं भुक्तभक्तयोः ॥
भिन्नमन्यार्थवचने सङ्गते दारिते स्फुटे ॥ १५ ॥
विन्नं ज्ञाते स्थितौ लब्धे छिन्नं भिन्ने तु वाच्यवत् ॥
छिन्नाऽमृतायां पुंश्चल्यामुन्नः क्लिन्ने च सूरते ॥ १६ ॥
चिह्नं ध्वजे पताकायां द्युम्नं वित्ते पराक्रमे ॥
धनुःसंज्ञा पियालद्रौ राशिभेदे शरासने ॥ १७ ॥
तनुः काये कृशे चाऽल्पे विरलेऽपि च वाच्यवत् ॥
हनुः प्रहरणे मृत्यौ कपोलावयवे गदे ॥ १८ ॥
हनुर्हट्टविलासिन्यां सूनुः पुत्रेऽनुजे रवौ ॥
सानुः शृङ्गे बुधे मार्गे वात्यायां पल्लवे नवे ॥ १९ ॥

दानुर्दातारि विज्ञाते भानुः किरणसूर्ययोः ॥
धेनः समुद्रे नद्यान्तु धेनी स्योनः सिते खगे ॥ २० ॥
मुनिर्यमीङ्गुदीबुद्धपियालागस्ति किंशुके ॥
ज्यानिर्हानौ स्रवन्त्याश्च योनिः स्यादाकरे भगे ॥ २१ ॥
ज्योत्स्नी पटोलिकायां स्याज्ज्योत्स्नायुक्तविभावरौ ॥
ज्यौत्स्नी सचन्द्रनक्षत्ररात्रौ चन्द्रातपेऽपि च ॥ २२ ॥
रास्ना स्मृता भुजङ्गाक्ष्यामेलापर्ण्यांश्च कथ्यते ॥
मृत्स्ना तु वरिकायां स्यान्मृत्सायामपि दृश्यते ॥ २३ ॥
गीना मूषिकयोषायां दुर्गते कातरेऽन्यवत् ॥
धानाभृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि ॥ २४ ॥

नत्रिकम् ॥

अवनं रक्षणे प्रीतौ भवनं भाववेश्मनोः ॥
भुवनं विष्टपे मह्यां सलिलेऽपि वियत्यऽपि ॥ २५ ॥
सवनं यज्ञियस्नाने सोमनिर्दलनेऽपि च ॥
अयनं पथि भानोः स्यादुदग्दक्षिणतो गतौ ॥ २६ ॥
जयनं स्यात्तुरङ्गादिसन्नाहे विजयेऽपि च ॥
शयनं सुरते निद्राशय्ययोरपि भाषितम् ॥ २७ ॥
शमनं शान्तिवधयोः शमनः श्राद्धदैवते ॥
दशनः कवचे दन्ते दशनः शिखरेऽपि च ॥ २८ ॥
जघनश्च स्त्रियाः श्रोणिपुरोभागे कटीरके ॥
तपनस्तरणौ तापे भल्लाते नरकान्तरे ॥ २९ ॥
रसनं स्वादने ध्वाने रसना काञ्चिजिह्वयोः ॥
रसनश्चाऽपि रास्नायां वसनं छादनेंऽशुके ॥ ३० ॥
हसनश्च स्मृतं हासेऽङ्गारधान्यां हसन्यपि ॥
श्वसनो मारुते श्वासे श्वसनो मदनद्रुमे ॥ ३१ ॥

कदनं मर्द्दने पापे सदनं मन्दिरे जले ॥
मदनः स्मरधुत्तूरवसन्तद्रुमसिक्थके ॥ ३२ ॥
दहनश्चित्रके वह्नौ भल्लाते दुष्टवेष्टिते ॥
गहनं गहने दुःखे विपिने कलिलेऽपि च ॥ ३३ ॥
स्तननं ध्वनिमात्रे स्यात् कुन्थने मेघगर्जिते ॥
निधनं स्यात् कुले नाशे प्रधनं दारणे रणे ॥ ३४ ॥
पवनाख्या कुलाले स्यात् पाकस्थानेऽपि मारुते ॥
निष्पावे चाथवपनं बीजाधानेऽपि मुण्डने ॥ ३५ ॥
दमनः कुसुमे वीरे वमनं छर्द्दनेऽर्द्दने ॥
स्यादाहृतौ च यमनं दुःखे चोपरतौ यमे ॥ ३६ ॥
क्रमुनः कामुके कामेऽभिरूपेऽशोकपादपे ॥
धमनोऽप्यनले भस्त्राध्मापकक्रूरयोः स्मृता ॥ ३७ ॥
धमनी तु हरिद्रायां कन्धराशिरयोरपि ॥
मलनः पटवासे स्यान्मर्द्दने मलनं मतम् ॥ ३८ ॥
चलनं कम्पनं कम्पे कम्प्रे चलनकम्पनौ ॥
चलनी वस्त्रघर्घर्य्यां वारिभेदेऽपि च क्वचित् ॥ ३९ ॥
सेचनं रक्षणे सेके नौकासेचनभाजने ॥
सेवनं सीवनोपास्त्योः संव्यानं छादनेंऽशुके ॥ ४० ॥
समानं सत्समैकेषु समानो नाभिमारुते ॥
शोभनो ग्रहयोगे स्याच्छोभनं सुन्दरेऽन्यवत् ॥ ४१ ॥
शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्त्रिषु ॥
वासनं वसने वीरासने ज्ञाने च धूपने ॥ ४२ ॥
आसनं द्विरदस्कन्धे पीठे यात्रानिवर्त्तने ॥
असनी पण्यवीथ्यां स्यादासनो जीवकद्रुमे ॥ ४३ ॥
स्पर्शनो मारुते स्पर्शधानयोः स्पर्शनं मतम् ॥

दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ॥ ४४ ॥
शास्त्रदर्पणयोश्चाऽपि दंशनं दंशवर्मणोः ॥
पिशुनं कुङ्कुमे क्रूरे सूचके चाऽभिधेयवत् ॥ ४५ ॥
पिशुनः कपिवक्त्रे स्यात् स्पृक्कायां पिशुना मता ॥
शकुनश्च शुभाशंसानिमित्ते शकुनः खगे ॥ ४६ ॥
मिथुनो राशिभेदे स्यान्मिथुनं दम्पतीयुगे ॥
तलुनं पवने यूनि स्त्रियाञ्च तलुनीं विदुः ॥ ४७ ॥
तलिनं विरले स्तोके स्वच्छेऽपि तलिनं मतम् ॥
मलिनं दूषिते कृष्णे ऋतुमत्यां मलिन्यऽपि ॥ ४८ ॥
कठिनं निष्ठुरे स्थाल्यां शर्करायां गुडस्य च ॥
कठिना काटिकायान्तु कठिनीति प्रयुज्यते ॥ ४९ ॥
पीतनं हरिताले स्यात् कुङ्कुमे पीतदारुणि ॥
आम्रातके पीतनश्च मैथुनं सङ्गते रते ॥ ५० ॥
केतनं लाञ्छने कार्षे गेहे चोपनिमन्त्रणे ॥
छर्द्दनोऽलम्बुषे निम्बे छर्द्दनं वमने तरे ॥ ५१ ॥
छेदनं कर्त्तने भेदे छदनं पक्षपत्रयोः ॥
रोदनं व्यथने तोत्रे रोदनं रोधनेऽश्रुणि ॥ ५२ ॥
अपानन्तु गुदे प्रोक्तमपानस्तस्य मारुते ॥
सन्तानं सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे ॥ ५३ ॥
वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि ॥
वृत्तभेदावसरयोर्वितानं तुच्छमन्दयोः ॥ ५४ ॥
उत्तानं स्यादगम्भीरे तथा सुप्तोन्मुखेऽन्यवत् ॥
आदनं ग्रहणे विद्यादलङ्कारे च वाजिनाम् ॥ ५५ ॥
निदानं कारणे रोगनिर्णये वत्सदामनि ॥
उद्यानं वनभेदे स्यान्निःसृतेऽपि प्रयोजने ॥ ५६ ॥

अम्लानो झिण्टिकाभेदे वाच्यवन्निर्मले स्मृतः ॥
व्युत्थानं स्वैरकरणे विरोधाचरणेऽपि च ॥ ५७ ॥
उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे ॥
अङ्गनोद्गमहर्षेषु मलवेगेऽपि कीर्त्तितम् ॥ ५८ ॥
संस्थानमाहृतौ मृत्यौ सन्निवेशे चतुष्पथे ॥
धावनं प्रगमे शुद्धौ पृश्निपर्ण्यान्तु धावनी ॥ ५९ ॥
पावनन्तु जले कृच्छ्रे पावकाध्माशयोर्विदुः ॥
पावनः सिह्लके वह्नौ प्रायश्चित्ते च पावनम् ॥ ६० ॥
वाच्यवत् पावयितरि हरीतक्यान्तु पावनी ॥
वामनो कोटवैकुण्ठखर्वदाक्षिणादिग्गजे ॥ ६१ ॥
स्थापनं स्यात् पुंसवने समाधौ रोपणेऽपि च ॥
यापनं वर्त्तने कालक्षेपे निरसनेऽपि च ॥ ६२ ॥
युञ्जानः सारथौ विप्रे बुधानः पण्डिते गुरौ ॥
दृशानं ज्योतिषि प्रोक्तं दृशानश्च विरोचने ॥ ६३ ॥
जवनो देशभेदे स्याद्वेगवेगाधिकाश्वयोः ॥
जवन्योषधिभेदे स्याद्वाच्यवद्वेगिनि स्मृतः ॥ ६४ ॥
जीवनं वर्त्तने नीरे पुत्रजीवे तु जीवनः ॥
जीवनी जीवना चेति जीवन्तीमेदयोः क्रमात् ॥ ६५ ॥
देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि ॥
अक्षेषु देवनः प्रोक्तो वाच्यवद् वाग्मिविप्रयोः ॥ ६६ ॥
तेमनं व्यञ्जने क्लेदे तेमने चुल्लिकान्तरे ॥
सावनो यज्ञकर्म्मान्ते यजमानप्रचेतसोः ॥ ६७ ॥
विज्ञानं कर्मणे ज्ञाने प्रज्ञानं लाञ्छने धियि ॥
हायनोऽर्च्चिषि वर्षे च व्रीहिभेदे च हायनः ॥ ६८ ॥
फाल्गुनस्तु तपस्ये स्यात् पूर्णिमायान्तु फाल्गुनी ॥

फाल्गुनः कथितः पार्थे नदीजे ककुभेऽपि च ॥ ६९ ॥
वेष्टनं कर्णशष्कुल्यामुष्णीषे परिवारणे ॥
गोस्तनो हारभेदे स्याद् द्राक्षायां गोस्तनीति च ॥ ७० ॥
कल्पनं कर्त्तने क्लृप्तौ सज्जनायान्तु कल्पना ॥
कर्त्तनं छेदने माहुर्नारीणां तूलसेवने ॥ ७१ ॥
लङ्घनन्तूपवासे स्यात् क्रमणे प्लवनेऽपि च ॥
मण्डनं स्यादलङ्कारेऽलङ्करिष्णुनि वाच्यवत् ॥ ७२ ॥
भण्डनं कवचे युद्धे खलीकारे च वर्त्तते ॥
मुण्डनं वपने त्राणे हिण्डिनं लेखने रते ॥ ७३ ॥
अङ्गनं प्राङ्गने याने कामिन्यामङ्गना मता ॥
गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने ॥ ७४ ॥
नन्दनं वासवोद्याने नन्दनो हर्षके सुते ॥
स्यन्दनन्तु स्रुतौ नीरे स्यन्दनस्तिनिशे रथे ॥ ७५ ॥
क्रन्दनं रोदने ह्वाने चन्दनं मलयोद्भवे ॥
चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनी ॥ ७६ ॥
वर्द्धनं छेदने वृद्धौ वारिधान्यान्तु वर्द्धनी ॥
व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च ॥ ७७ ॥
रञ्जनो रागरजने रञ्जनं रक्तचन्दने ॥
गुञ्जारोचनिकानीलीमाञ्जिष्ठासु च रञ्जनी ॥ ७८ ॥
अञ्जनं कज्जले चाङ्के सौवीरे च रसाञ्जने ॥
अञ्जनो दिग्गजे जेष्ठ्यामञ्जनाऽप्यनिलस्त्रियाम् ॥ ७९ ॥
अञ्जनी लेपनायां स्याद् गृञ्जनस्तु रसोनके ॥
विषादिग्धपशोर्मांसे गुञ्जनश्च प्रकीर्त्तितम् ॥ ८० ॥
लेखनं छदने भूर्जे लिपिन्यासे च लेखनम् ॥
योजनश्च चतुष्क्रोश्यां योगे च परमात्मनि ॥ ८१ ॥

गर्ज्जनं निस्वने कोपे वर्ज्जनं त्यागहिंसयोः ॥
मार्ज्जनं कथितं मार्ष्टौ मार्ज्जनो लोध्रशाखिनि ॥ ८२ ॥
सज्जनो वाच्यवत् साधौ सज्जनं घट्टगुल्मके ॥
सज्जना कल्पनायान्तु भाजनं योग्यपात्रयोः ॥ ८३ ॥
अर्ज्जुनः ककुभे पार्थे कार्त्तवीर्य्यमयूरयोः ॥
मातुरेकसुते च स्यादर्ज्जुनो धवलेऽन्यवत् ॥ ८४ ॥
अर्ज्जुनन्तु तृणे नेत्रगदे चाऽप्यार्ज्जुनी गवि ॥
उषायां करतोयायां कुट्टन्यामपि च क्वचित् ॥ ८५ ॥
वृजिनं कल्मषे केशे वृजिनः कुटिलेऽन्यवत् ॥
लाञ्छनं लक्षणे नाम्नि बन्धनं वधबन्धयोः ॥ ८६ ॥
जगन्नुरग्नौ जन्तौ च मेहनं मूत्रशिश्नयोः ॥
प्रसूनं वाच्यवज्जाते प्रसूनं फलपुष्पयोः ॥ ८७ ॥
कानीनः कन्यकाजाततनये व्यासकर्णयोः ॥
काननं विपिने गेहे परमेष्ठिमुखेऽपि च ॥ ८८ ॥
काञ्चनः काञ्चनारे स्याच्चम्पके नागकेशरे ॥
उदुम्बरे च पुन्नागे हरिद्रायाञ्च काञ्चनी ॥ ८९ ॥
काञ्चनं हेम्नि किञ्जल्के पुन्नागे काचभाजने ॥
मोलके चाथ शकुनिः सौवले करणे खगे ॥ ९० ॥
रोचनो रक्तकह्लारे रोचनः कूटशाल्मलौ ॥
मङ्गल्येऽपि च गोपित्ते रोचना रुचिरास्त्रियाम् ॥ ९१ ॥
व्यसनन्त्वशुभे सक्तौ पानस्त्रीमृगयादिषु ॥
दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे ॥ ९२ ॥
उदानोऽप्युदरावर्त्ते मरुत्सर्पविशेषयोः ॥
उद्धानमुद्गते चुल्ल्यां विलग्नो मध्यलग्नयोः ॥ ९३ ॥
सन्धानं स्यादभिषवे तथा सङ्घटनेऽपि च ॥

राधनं राधने प्राप्तौ राधनं तोषणेऽपि च ॥ ९४ ॥
साधनं निर्वृतौ मेण्ढ्रे सैन्ये सिद्धौ गतौ वधे ॥
उपाये मृतसंस्कारे दापनेऽनुगमे धने ॥ ९५ ॥
प्रधानः स्यान्महामात्ये प्रकृतौ परमात्मनि ॥
प्रज्ञायाश्च प्रधानं स्यादेकत्वेऽनुसदोत्तमे ॥ ९६ ॥
ग्रामीनो ग्रामसम्भूते ग्रामीनः शुनिवायसे ॥
पाठीनो मीनभेदे स्यात् पाठके गुग्गुलुद्रुमे ॥ ९७ ॥
कौलीनः स्यात् कुलीनत्वे गुह्ये जन्ये कुकर्म्मणि ॥
कौशेयके विहङ्गादिपशूनां सङ्गरेऽपि च ॥ ९८ ॥
कौपीनं स्यादकार्ये च गुह्यचीरप्रदेशयोः ॥
विक्लिन्नो जरया जीर्णे शीर्णे चार्द्रे च वाच्यवत् ॥ ९९ ॥
आपन्नः सविपत्तौ स्यात् प्राप्ते वाच्यवदीरितः ॥
विपन्नः कथितो नष्टे विपन्नश्च भुजङ्गमे ॥ १०० ॥
विच्छिन्नश्च समालब्धे विपन्ने कुटिलेऽन्यवत् ॥
सम्पन्नं साधिते प्रोक्तं सम्पत्तिसहितेऽन्यवत् ॥ १०१ ॥
तमोघ्नः सूर्यवह्नीन्दुबुद्धशङ्करविष्णुषु ॥
विषघ्नाख्या शिरीषे स्यात्त्रिवृताऽमृतयोरपि ॥ १०२ ॥
शिखी वह्नौ बलीवर्द्दे शरे केतुग्रहे द्रुमे ॥
केकिकुक्कुटयोश्चाऽथ शिखी चूडान्वितेऽन्यवत् ॥ १०३ ॥
शाखी स्यात् पादपे वेदे तुरुष्काख्यजनेऽपि च ॥
खड्गी खड्गायुधे गण्डे शृङ्गी नागद्रुमाद्रिषु ॥ १०४ ॥
चक्री कुलालवैकुण्ठे कोकाहिग्रामजालिषु ॥
धन्वी धनुर्धरे पार्थे विदग्धे ककुभद्रुमे ॥ १०५ ॥
कृती स्यात् पण्डिते योग्ये पाशी पाशधरेऽप्पतौ ॥
नन्दी हरप्रतीहारे गर्द्दभाण्डे वटद्रुमे ॥ १०६ ॥

नन्दिनी तु ननन्दायां धेन्वां सुरसरित्यपि ॥
रोही रोहितकेऽश्वत्थवटपादपयोरपि ॥ १०७ ॥
हली बले कृषीके स्यादली वृश्चिकभृङ्गयोः ॥
वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि ॥ १०८ ॥
शिल्पी स्याद्वाच्यवत् कारौ नायिकायाश्च शिल्पिनी ॥
कामी स्यात् कामुके चक्रवाके पारावतेऽपि च ॥ १०९ ॥
गोमी तु पाशके पूरौ वाग्मी वाचस्पतौ पटौ ॥
चर्म्मी फलकपाणौ स्याद्भूर्ज्जे भृङ्गरटावपि ॥ ११० ॥
अर्थी स्याद्याचके यज्ञे सेवके च विवादिनि ॥
स्वामी प्रभौ विशाखे च रागी रक्ते च कामुके ॥ १११ ॥
ध्वजी शैले रथे विप्रे भुजङ्गमतुरङ्गयोः ॥
भोगी भुजङ्गमे राज्ञि ग्रामिण्यां नापितेऽपि च ॥ ११२ ॥
विहाय महिषीश्चान्यराजयोषिति भोगिनी ॥
द्युवा त्वभिनवे भानौ प्रेत्वा मरुति सारके ॥ ११३ ॥
राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः ॥
अध्वा वर्त्मनि संस्थाने साश्रवस्कन्धकालयोः ॥ ११४ ॥
धन्वा जङ्गलदेशे स्याद्धन्वचापे स्थलेऽपि च ॥
आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु ॥ ११५ ॥
प्रयत्ने चाऽप्यथ ग्रावा प्रस्तरे जलदे गिरौ ॥
ब्रह्माविरिञ्चाद्विजयोर्ऋत्विक्चन्द्रार्कयोगयोः ॥ ११६ ॥
ब्रह्मप्रोक्तं तपोऽध्यात्मवेदज्ञानेषु सूरिभिः ॥
अर्वा च कुत्सिते वाहे वृषा कर्णमहेन्द्रयोः ॥ ११७ ॥
युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि ॥
पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे ॥ ११८ ॥
दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ॥

भर्म्म स्वर्णे भृतौ भारे चर्म्म स्याद्वल्कलत्वचोः ॥ ११९ ॥
कर्म्म व्याप्ये क्रियायाञ्च वर्त्मनेत्रच्छदाध्वनोः ॥
वर्ष्म देहे प्रमाणातिसुन्दराकारयोरपि ॥ १२० ॥
सद्म स्यान्मन्दिरे नीरे छद्म साध्यापदेशयोः ॥
धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः ॥ १२१ ॥
प्रेम नर्म्मणि च स्नेहे व्योम वारिविहायसोः ॥
पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि ॥ १२२ ॥
लक्ष्म चिह्ने प्रधाने स्यादशनिः पविविद्युतोः ॥
अरत्निः कफणौ हस्ते सप्रकोष्ठततांगुलौ ॥ १२३ ॥
सेनानीः कार्त्तिकेये स्यात्तथा सेनापतावऽपि ॥
ह्लादिनी वज्रतडितोः कामिनी भीरुवन्दयोः ॥ १२४ ॥
वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः ॥
वर्त्तनी तर्कुपिण्डे स्याद्वर्त्तनी मालिने पथि ॥ १२५ ॥
बोधनी बोधपिप्पल्योर्बोधनं गन्धबोधने ॥
वांणिनी नर्त्तकीमत्तविदग्धवनितासु च ॥ १२६ ॥
रजनी नीलिकालाक्षाहरिद्रायामिनीषु च ॥
नलिनी पद्मिनीपद्मव्योमसिन्धुसरोवरे ॥ १२७ ॥
नलिकायाञ्च नालिनी नलिनं कमले जले ॥
मालिनी वृत्तभेदे स्यान्मालाकारस्त्रियामपि ॥ १२८ ॥
चम्पानगर्य्यां गौर्य्याञ्च मन्दाकिन्याञ्च मालिनी ॥
शङ्खिनी श्वेतपुन्नागे चौरपुष्प्यां वधूभिदि ॥ १२९ ॥
पद्मिनी स्त्रीविशेषे स्यात् सरस्यामम्बुजेऽपि च ॥
हस्तिनी गजयोषायां नारीभेदे च हास्तिनी ॥ १३० ॥
सन्धिनी तु वृषाक्रान्ताकालदुग्धगवोः स्मृता ॥
भट्टिनी द्विजभार्य्यायां नाट्योक्तौ राजयोषिति ॥ १३१ ॥

रेचनी त्रिवृतादन्ती गुडरोचानिकासु च ॥
अर्शोघ्नी तालमूल्यां स्यादर्शोघ्नः शूरणेऽपि च ॥ १३२ ॥
शतघ्नी शस्त्रभेदे स्याद् वृश्चिकाल्यां करञ्जके ॥
असिक्नी स्यादवृद्धान्तःपुरप्रेष्यस्त्रियां धुनौ ॥ १३३ ॥
सूचनाऽव्यधने दृष्टौ गन्धनेऽभिनयेऽपि च ॥
भावना लेपने ध्याने वेदना ज्ञानदुःखयोः ॥ १३४ ॥
कुहना दम्भचर्य्यायामीर्ष्यालौ कुहनः पुनः ॥
पूतना राक्षसीभेदे हरीतक्याश्च पूतना ॥ १३५ ॥
पृतनाऽनीकनीसेना चमूसैन्यान्तरेऽपि च ॥
चेतना संविदि प्रोक्ता वाच्यवत् प्राणिनि स्मृता ॥१३६॥
प्रसन्ना मदुरायाञ्च प्रसादसहितेऽन्यवत् ॥
ललना नाडिकाभेदे जिह्वायां वरयोषिति ॥
श्लेष्मघ्नी कथिता मल्ल्यां काम्पिल्लकफणिज्जयोः ॥१३७॥

नचतुष्कम् ॥

महाधनं महामूल्ये सुवस्त्रे सिल्हकेऽपि च ॥
तपोधनस्तापसे स्यान्मुण्डीर्य्याश्च तपोधना ॥ १३८ ॥
आराधनं तोषणे स्यात् प्राप्तौ च पचनेऽपि च ॥
उपधानं विशेषे च गेडुके प्रणयेऽपि च ॥ १३९ ॥
प्रणिधानं प्रयत्ने स्यात् प्रवेशे च समाहितौ ॥
आयोधनं वधे युद्धेऽवलग्नो मध्यलग्नयोः ॥ १४० ॥
अभिजनः कुले ख्यातौ जन्मभूम्यां कुलध्वजे ॥
भवेत् पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च ॥ १४१ ॥
विसर्ज्जनं परित्यागे दाने सम्प्रेषणेऽपि च ॥
पृथग्जनः स्मृतो नीचे मूर्खे चाऽथ प्रयोजने ॥ १४२ ॥
कार्य्यहेत्वोर्निधुवनं सुरते कम्पनेऽपि च ॥

अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे ॥ १४३ ॥
अपाचीनमवागर्थे विपर्यस्ते च वाच्यवत् ॥
प्रवचनं स्मृतं वेदे प्रकृष्टवचनेऽपि च ॥ १४४ ॥
वैरोचनस्तु सुगते बालिदैत्यार्कपुत्रयोः ॥
विरोचनोऽर्के दहने चन्द्रे प्रह्लादनन्दने ॥ १४५ ॥
आतञ्चनं प्रतीवापजवनाप्यायनेषु च ॥
अभिपन्नोऽपराध्येऽभिद्रुते ग्रस्ते विपद्गते ॥ १४६ ॥
प्रतिपन्नः स्मृतो धीरैर्विज्ञातेऽङ्गीकृतेऽपि च ॥
समापन्नं समासे स्यात् प्राप्ते क्लिष्टे वधेऽपि च ॥ १४७ ॥
भवेत् प्रजननं योनौ जन्मनि प्रगमेऽपि च ॥
आकलनं विबन्धे स्यादाकाङ्क्षापरिसङ्ख्ययोः ॥ १४८ ॥
सम्मूर्च्छनमभिव्याप्तौ सम्मूर्च्छामोहयोरपि ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणे मतौ ॥ १४९ ॥
कपीतनं गर्दभाण्डशिरीषाम्रातकेषु च ॥
अश्वत्थे च समुत्थानमुद्यमे रोगनिर्णये ॥ १५० ॥
आच्छादनं सम्पिधाने स्मृतं वस्त्रे प्रवारणे ॥
राजादनं क्षीरिकायां प्रियाले किंशुकेऽपि च ॥ १५१ ॥
क्रौञ्चादनस्तु पिप्पल्यां चिञ्चोटकमृणालयोः ॥
उत्सादनं समुल्लेखोद्वाहनोद्वर्त्तनेषु च ॥ १५२ ॥
वृक्षादनश्चलदले मधुक्षुद्रकुठारयोः ॥
वृक्षादनी स्मृता वन्दाविदारीगन्धयोरपि ॥ १५३ ॥
सदादानोऽभ्रमातङ्गे हेरम्बे गन्धहस्तिनि ॥
अवदानमितिवृत्ते कर्मखण्डनयोरपि ॥ १५४ ॥
कुचन्दनश्च पत्राङ्गे द्रुभेदे रक्तचन्दने ॥
आस्कन्दनं तिरस्कारे रणे संशोषणेऽपि च ॥ १५५ ॥

संवननं समालोचे वशीकारे प्रकीर्त्तितम् ॥
विहेठनन्तु हिंसायां मर्द्दने च विडम्बने ॥ १५६ ॥
जलाटनो लोहपृष्ठे जलौकायां जलाटनी ॥
प्रस्फोटनं भवेत् सूर्पे ताडने च प्रकाशने ॥ १५७ ॥
उत्पतनं समुत्पत्तौ तथार्द्धगमनेऽपि च ॥
उद्वर्त्तनं सोत्पतनेऽप्यपावृत्तौ विलेपने ॥ १५८ ॥
समादानं समीचीनग्रहणे नित्यकर्मणि ॥
संयमनी व्रते पुर्य्यां संयमनी यमस्य च ॥ १५९ ॥
निशमनं स्तुतौ दृष्टौ दृष्ट्यालोचे निशामनम् ॥
प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ॥ १६० ॥
अभिमानः स्मृतो ज्ञाने वर्गे प्रणयहिंसयोः ॥
अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासनेऽपि च ॥ १६१ ॥
वर्द्धमानः पुष्टिभेदे शरावैरण्डविष्णुषु ॥
मालुधानश्चित्रसर्पे मालुधानी लतान्तरे ॥ १६२ ॥
प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च ॥
भवेदुदयनो वत्सराजेऽगस्त्यमुनावपि ॥ १६३ ॥
विहननं विघाते स्यात् पिञ्जने तूलधूनने ॥
संवाहनं वाहनेऽपि भारादेरङ्गमर्द्दने ॥ १६४ ॥
उद्वाहनं दिशीत्ये स्याद्रज्जावुद्वाहिनी मता ॥
महासेनो विशाखे स्यान्महासैन्यपतावपि ॥ १६५ ॥
रसायनं विडङ्गे स्याद्राजव्याधिजितौषधे ॥
रसायनः पक्षिराजे विषेऽपि च रसायनम् ॥ १६६ ॥
कात्यायनो वररुचौ गौर्य्यां कात्यायनी मता ॥
काषायवस्त्रविधवाऽर्द्धजरत्यामपीष्यते ॥ १६७ ॥
सुदर्शनो हरेश्चक्रेऽमरावत्यां सुदर्शना ॥

आज्ञायामोषधीभेदे मरुजम्ब्वां सुदर्शना ॥ १६८ ॥
निर्भर्त्सनं खलीकारेऽलक्तके च समापनम् ॥
परिच्छेदे समाप्तौ च समाधाने प्रमापणे ॥ १६९ ॥
अन्वासनं स्नेहवस्तावुपास्तावनुशोचने ॥
उपासनं शराभ्यासे शुश्रूषायाश्च हिंसने ॥ १७० ॥
निरसनं निरासे स्याद्वधे निष्ठीवनेऽपि च ॥
निर्वासनं हिंसने च नगरादेर्बहिष्कृतौ ॥ १७१ ॥
आवेशनं शिल्पिगृहे भूतावेशप्रवेशयोः ॥
सारसनं मेखलायामुरस्त्रे च तनुत्रिणाम् ॥ १७२ ॥
प्रहसनं भवेद्भङ्गे प्रहासाक्षेपयोरपि ॥
वारासनं वाःसदने शूल्मपद्वारपालयोः ॥ १७३ ॥

घनाघनो घातुकमत्तदन्तिनो-
र्निरन्तरे वासववर्षुकाब्दयोः ॥
सनातनः शाश्वतकंसवैरिणोः
शिवे पितॄणामतिथौ मुनिश्चले ॥ १७४ ॥

सुयामुनो वत्सराजे प्रसादेऽभ्यन्तरेऽच्युते ॥
विस्मापनाख्या कुहके गन्धर्वनगरे स्मरे ॥ १७५ ॥
सुकर्मा ग्रहयोगे स्यात् सुकर्मा देवशिल्पिनि ॥
दुर्नामाख्यातिगुदजदीर्घकोशिकयोरपि ॥ १७६ ॥
द्विजन्मा दशने विप्रे भूतात्मा पुद्गले विधौ ॥
आर्यमा सूर्यभक्तायां सूर्ये च पितृदैवते ॥ १७७ ॥
सुदामा भूधरे मेघे विश्वगङ्गाऽनलचन्द्रयोः ॥
सुधन्वा प्रौढधानुष्के सुधन्वा विश्वकर्मणि ॥ १७८ ॥
वनश्वा गन्धमार्जारे बन्धकव्याघ्रयोरपि ॥
परिश्वा क्रतुकर्माङ्गे याज्ञिके परिचारके ॥ १७९ ॥

अथर्वा ब्राह्मणे वेदे त्वऽथर्व परिकीर्तितम् ॥
सुपर्वा त्रिदशे वंशे शरे धूमेऽपि पर्वणि ॥ १८० ॥
ललाम च ललामश्च लाञ्छनध्वजवाजिषु ॥
शृङ्गे प्रधाने भूषायां रम्ये बालधिपुण्ड्रयोः ॥ १८१ ॥
प्रभावे च कलापी तु प्लक्षबर्हिणयोरपि ॥
प्रत्यर्थी कथितः शत्रौ प्रत्यर्थी प्रतिवादिनि ॥ १८२ ॥
केशरी तुरगे सिंहे पुन्नागे नागकेशरे ॥
शिखरी पादपे शैले तथाऽपामार्गकोट्टयोः ॥ १८३ ॥
शृङ्गारी तु सुवेशे स्यात् क्रमुके च मतङ्गजे ॥
विलासी भोगिनि व्याले पलाशी वृक्षरक्षसोः ॥ १८४ ॥
शिखण्डी तु मयूरे स्याद्बाणक्षत्रियभेदयोः ॥
कलापे चाऽथ गुञ्जायां यूथिकायां शिखण्डिनी ॥ १८५ ॥
विषयि त्विन्द्रिये ख्यातं वाच्यवद्विषयान्विते ॥
व्यवायी कामपे द्रव्यविशेषे च समीरितः ॥ १८६ ॥
तपस्वी तापसे चानुकम्पके च तपस्विनी ॥
मांसिका कटुरोहिण्योस्तरस्वी वेगिशूरयोः ॥ १८७ ॥
लाङ्गली बलभद्रे स्यान्नारिकेले च लाङ्गली ॥
कुण्डली वरुणे केकिभोगिनोश्च सकुण्डले ॥ १८८ ॥
चोलकी तु करीरे स्यान्नारङ्गे किष्कुपर्वणि ॥
फलकी स्यादालिसाख्यमत्स्ये फलकपाणिके ॥ १८९ ॥
कञ्चुकी भुजगे षिङ्गे मल्ले जाङ्गलिकद्रुमे ॥
सामयोनिस्तु सामोत्थे सामयोनिर्गजे विधौ ॥ १९० ॥
कुम्भयोनिरगस्त्ये स्याद्द्रोणेऽर्जुनस्य गुरावपि ॥
आत्मयोनिर्विधौ कामे चित्रभानुः खगेऽनले ॥ १९१ ॥
महामुनिरगस्त्ये स्याद्धन्याकागस्त्ययोरपि ॥

कलध्वनिः कोकिले स्यात् पारावतमयूरयोः ॥ १९२ ॥
गदयित्नुः स्मृतः कामे जल्पके कामुकेऽपि च ॥
मदयित्नुर्भवेत् सीधौ मद्ये स्यान्मदयित्नु च ॥ १९३ ॥
हर्षयित्नु सुते हेम्नि घोषयित्नुर्द्विजे पिके ॥
स्तनयित्नुः पयोवाहे तद्ध्वनौ मृत्युरोगयोः ॥ १९४ ॥
विष्वक्सेना फलिन्यां स्याद्विश्वक्सेनो जनार्दने ॥
देवसेनेन्द्रवाहिन्यां सेनायाश्च दिवौकसाम् ॥ १९५ ॥
नागाङ्गना नागयष्टिकरिमुद्गरिकाख्ययोः ॥
श्लेष्मघना मल्लिकायां केतक्यामपि कथ्यते ॥ १९६ ॥
प्रसाधिनी कङ्कतिका सिद्धौ वेशे प्रसाधनम् ॥
सामिधेनी ऋचि प्रोक्ता सामधेनी समिध्यऽपि ॥ १९७ ॥
सरोजिनी स्यात् कासारे पद्मिनीपद्मयोस्तथा ॥
विलेपनी स्यात्तुरला सुवेशाङ्गनयोरपि ॥ १९८ ॥
मातुलानी कलापे स्याद्भङ्गायां मातुलस्त्रियाम् ॥
पयस्विनी तु गोधेन्वां विभावर्यां पयस्विनी ॥ १९९ ॥
गवादनीन्द्रवारुण्यां गवां घोपादनाश्रये ॥
सौदामिन्यप्सरोभेदे तडित्तद्भेदयोरपि ॥ २०० ॥

नपञ्चकम् ॥

पीतचन्दनमित्येतत् कालीयकहरिद्रयोः ॥
वरचन्दनमाख्यातं कालीये देवदारुणि ॥ २०१ ॥
हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे ॥
ज्योत्स्नायां कुङ्कुमे चाऽतिसर्ज्जनं वधदानयोः ॥ २०२ ॥
मधुसूदनसंज्ञा च भ्रमरे वनमालिनि ॥
स्यान्मृत्युवञ्चनः शम्भौ श्रीफलद्रोणकाकयोः ॥ २०३ ॥
स्यादपवर्ज्जनं मोक्षे परित्यागे विहायिते ॥

अपसर्ज्जनमास्नाते परिवर्ज्जनदानयोः ॥ २०४ ॥
महारजनमुद्दिष्टं शातकुम्भकुसुम्भयोः ॥
स्यात् प्रतिपादनं दाने प्रतिपत्तौ च बोधने ॥ २०५ ॥
गन्धमादनमित्याहुर्गन्धके वानरान्तरे ॥
अद्रिभेदे च भृङ्गे च सुरायां गन्धमादनी ॥ २०६ ॥
स्यादनुवासनं स्नेहकर्म्मधूपनयोरपि ॥
श्वेतवाहन इत्याख्या सुधाधाम्नि धनञ्जये ॥ २०७ ॥
हरिवाहन इत्युक्तः शचीपतिविवस्वतोः ॥
अभिनिष्ठानशब्दोऽपि विसर्ज्जनीयेऽक्षरे मतः ॥ २०८ ॥
धूमकेतनमिच्छन्ति हुताशग्रहभेदयोः ॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ॥ २०९ ॥
शिवकीर्त्तननामाऽपि भृङ्गरीटेऽसुरद्विषि ॥
शालङ्कायनशब्दः स्यादृषिभेदे च नान्दिनि ॥ २१० ॥
स्यात्पद्मलाञ्छनाभिख्या विधौ लोकेश्वरार्कयोः ॥
धनदे च सरस्वत्यां तारालक्ष्म्योरपि स्मृता ॥ २११ ॥
स्यात् षष्ठिहायनो धान्यविशेषेऽपि मतङ्गजे ॥
जानीयादुपसम्पन्नं निहिते च सुसंस्कृते ॥ ३१२ ॥
विश्वकर्म्मा देवशिल्पि मुनिभेदोष्णरश्मिषु ॥
कृष्णवर्त्मा हुताशे स्याद् दुराचारे विधुन्तुदे ॥ २१३ ॥
अग्रजन्मा द्विजे ज्येष्ठभ्रातरि ब्रह्मणि स्मृतः ॥
श्वेतधामा कलानाथे घनसाराब्धिभेदयोः ॥ २१४ ॥
तिक्तपर्वा तु यष्ट्याह्वगुडूचीहिलमोचिषु ॥
विष्कुपर्वा भवेद्द्रोणाविक्षौ पोटगलेऽपि च ॥ २१५ ॥
वृषपर्वा हरे दैत्ये शृङ्गारुणि कसेरुणि ॥
व्योमचारी खगे देवे चिरजीवी द्विकाकयोः ॥ २१६ ॥

कारन्धमे कांस्यकारे धातुवादरतेऽपि च ॥
वनमाली तु गोविन्दे वाराह्यां वनमालिनी ॥ २१७ ॥
प्रचलाकी भुजङ्गे स्याच्चित्रमेखलकेऽपि च ॥
सम्प्रयोगी कलाकेलौ कामुके सुप्रयोजके ॥ २१८ ॥
अन्तेवासी भवेच्छिष्ये चाण्डाले प्रान्तगेऽपि च ॥
विघ्नकारी स्मृतो घोरदर्शनेऽपि विघातिनि ॥ २१९ ॥
कामचारी तु कमने स्वच्छन्दकलविङ्कयोः ॥
हृष्टशृङ्गी भवेद्दंशे नारीषण्डे वृकोदरे ॥ २२० ॥
शकुलादन्यऽभिख्या तु मांसीपिचुलिकाह्वयोः ॥
कटुकाजलपिप्पल्योः कथ्यते शकुलादिनी ॥ २२१ ॥
स्याद्वरवर्णिनी लाक्षाहरिद्रारोचनासु ॥
स्त्रीरत्ने च फलिन्याश्च दृश्यते वरवर्णिनी ॥ २२२ ॥

नषट्कम् ॥

अन्तावसायी श्वपचे मुनिभेदे च नापिते ॥
जायानुजीवी तु नटे दुर्गताश्विनयोर्बके ॥ २२३ ॥
सहस्रवेधी स्यादम्लवेतसे रामटेऽपि च ॥
कलानुनादी रोलम्बे कलविङ्के कपिञ्जले ॥ २२४ ॥

इति नान्तवर्गः ॥

—:०:—

पद्विकम् ॥

रूपं स्वभावे सौन्दर्य्ये नामके पशुशब्दयोः ॥
ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥ १ ॥
रेपः स्यान्निन्दिते क्रूरे रोपो रोपणवाणयोः ॥
सूपो व्यञ्जनभेदे स्यात् सूपकारे च कीर्त्तितः ॥ २ ॥
क्षुपः क्षुपस्पर्शनयोश्चुपः पवनयुद्धयोः ॥

कूपः कूपकगर्ताम्बुमृन्मानगुणवृक्षके ॥ ३ ॥
तापोऽस्तितापे दवथौ तापी तु सरिदन्तरे ॥
शापः शपथ आक्रोशे त्रपुसीसकरङ्गयोः ॥ ४ ॥
स्वापः स्पर्शाज्ञतानिद्राशयनाशनमात्रके ॥
नीपो धूलिकदम्बे स्यान्नीलाशोके च धन्विनि ॥ ५ ॥
गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृपे ॥
गोपी गोपालमहिला शारिबारात्तिकासु च ॥ ६ ॥
क्षेपो विलम्बे निन्दायां हेलापे रणलङ्घने ॥
गर्वेऽपि लेपस्तु सुधाभोजनालेपनेषु च ॥ ७ ॥
तल्पन्तु शयनीये स्यात्तल्पमट्टकलत्रयोः ॥
कल्पः स्यात् प्रलये न्याये शास्त्रे ब्राह्मदिने विधौ ॥ ८ ॥
दर्पोऽहङ्कारकस्तूर्योर्वाष्पो नेत्रजलोष्मणोः ॥
पुष्पं विकाशे कुसुमे स्त्रीणाञ्च रजसि स्मृतम् ॥ ९ ॥
शष्पं स्यात् प्रतिभाहानौ शष्पं बालतृणेऽपि च ॥
शष्पः स्तवे क्रियायोग्ये शष्पः क्रोधे बलात्कृतौ ॥ १० ॥
कृपा दयायां व्यासर्षौ कृपो भारतपूरुषे ॥
त्रपा लज्जाकुलटयोर्वपा विवरमेदसोः ॥ ११ ॥

पत्रिकम् ॥

कुतपः स्यात् कुशे वाद्ये तपने छागकम्बले ॥
कुतपो भागिनेये स्यादष्टमांशे दिनस्य च ॥ १२ ॥
कुटपो मानभेदे स्यात् कुटपो निष्कुटे मुनौ ॥
विटपः पल्लवे शृङ्गे विस्तारे स्तम्बशाखयोः ॥ १३ ॥
उलपस्तृणभेदे स्याद् गुल्मिन्यामुलपः स्मृतः ॥
उडुपस्तु प्लवे चन्द्रे प्रपातः स्वेदतेजसोः ॥ १४ ॥
रक्तपो रक्षसि प्रोक्तो जलौकायान्तु रक्तपा ॥

जिह्वापः शुनि मार्ज्जारे व्याघ्रचित्रकयोरपि ॥ १५ ॥
काश्यपः स्यान्मुनौ मानभेदे भूमौ तु काश्यपी ॥
पादपः पादपीठेऽद्रौ पादुकायान्तु पादपा ॥ १६ ॥
अनूपं महिषे विद्याज्जलप्राये तु वाच्यवत् ॥
आवापो भाण्डपवने परिक्षेपालवालयोः ॥ १७ ॥
आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृतः ॥
एकोक्त्या कशिपुर्भक्त्या छादने च द्वयोः पृथक् ॥ १८ ॥
आकल्पः कल्पने वेशे विकल्पो भ्रान्तिपक्षयोः ॥
कच्छपी वल्लकीभेदे दुलौ क्षुद्रगदान्तरे ॥ १९ ॥
मल्लबन्धविशेषेऽपि कच्छपः कुणपी पुनः ॥
विट्शारिकायां कुणपः पूतिगन्धौ शवेऽपि च ॥
कलापो भूषणे बर्हे तूणीरे संहतेऽपि च ॥ २० ॥

पचतुष्कम् ॥

प्राप्तरूपो बुधे रम्येऽप्यभिरूपः सुरूपवत् ॥
बहुरूपः शिवे विष्णौ धूनके सरटे स्मरे ॥ २१ ॥
वृकधूपस्तु सरले द्रवकृत्रिमधूपयोः ॥
परित्रापस्तु पर्याप्तौ जलस्थाने परिच्छदे ॥ २२ ॥
उपतापस्त्वरायां स्यादुत्तापगदयोरपि ॥
अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च ॥ २३ ॥
विप्रलापो विरोधाक्तावपार्थवचनेऽपि च ॥
वृषाकपिः शिवे कृष्णे ज्वलने च वृषाकपिः ॥ २४ ॥
परिकम्पो भवे कम्पेऽपलापः प्रेम्ण्यपह्नवे ॥
बीजपुष्पं मरुवके तथा दमनकेऽपि च ॥ २५ ॥
हेमपुष्पं जवापुष्पे चम्पकाशोकयोर्मतम् ॥
नागपुष्पस्तु पुन्नागे नागकेशरचम्पके ॥ २६ ॥

पिण्डपुष्पमशोके च जवायाञ्च कुशेशये ॥
मेघपुष्पन्तु पिण्डाभ्रे नादेयजलयोरपि ॥ २७ ॥
जलकूपी कूपगर्त्ते पुष्करिण्याञ्च कथ्यते ॥

पपञ्चकम् ॥

भवेच्चामरपुष्पस्तु चूते केतकहासयोः ॥ २८ ॥

इति पान्तवर्गः ॥

—:०:—

फद्विकम् ॥

रेफो रवर्णे सम्प्रोक्तः कुत्सिते वाच्यवत् पुनः ॥
शफं मूले तरूणां स्याद्गवादीनां खुरेऽपि च ॥ १ ॥
गुफः स्याद्गुम्फने बाहोरलङ्कारे च कीर्त्यते ॥
शिफा जटायां सरिति मांसिकायाञ्च मातरि ॥ २ ॥

इति फान्तवर्गः ॥

—:०:—

बद्विकम् ॥

पूर्वाख्या पूर्वजेषु स्यादग्रे प्राचि च वाच्यवत् ॥
निम्बः स्यात् पिचुमर्दे च तिक्तके च चिरायते ॥ १ ॥
बिम्बं फले बिम्बिकायां प्रतिबिम्बे च मण्डले ॥
डिम्बः स्याद्विप्लवप्लीह्नोरेरण्डे पुप्फुसे भये ॥ २ ॥
स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च ॥
शम्बः स्यान्मुषलाग्रस्थे लोहमण्डलके पवौ ॥ ३ ॥
शुभान्विते च खर्बः स्याद् ह्रस्वे सङ्ख्यान्तरेऽपि च ॥
कम्बुः शम्बूकगजयोर्ग्रीवानलकशङ्खयोः ॥ ४ ॥
जम्बूः सुमेरुसरिति द्वीपद्रुमविशेषयोः ॥
कम्बिरंशे च वंशस्य खजाकायामपीष्यते ॥ ५ ॥

दर्वी भवेत् खजाकायां फणायामुरगस्य च ॥
दार्वी दारुहरिद्रायां देवदारुहरिद्रयोः ॥
चार्वी तु शोभनावृद्ध्योर्लम्बा श्रीतिक्ततुम्बयोः ॥ ६ ॥

बत्रिकम् ॥

कदम्बमाहुः सिद्धार्थे नीपेऽपि निकुरम्बके ॥
कादम्बः कलहंसेष्वोर्द्विजिह्वो भुजगे खले ॥ ७ ॥
गजाह्वा करिपिप्पल्यां गजाह्वं हस्तिनापुरे ॥
नितम्बो रोधसि स्कन्धे शिखरेऽपि कटीरके ॥ ८ ॥
हेरम्बो विघ्नराजे स्यात् कासरे शौर्यगर्विते ॥
कलम्बः शायके नीपे नाऽलिशावकलब्यपि ॥ ९ ॥
प्रलम्बो दैत्यभेदे स्याद् बालाङ्कुरकशाखयोः ॥
प्रलम्बो हारभेदे स्यात्त्रपुपेऽपि पयोधरे ॥ १० ॥
गन्धर्वो मृगभेदे स्यत् पुंस्कोकिलतुरङ्गयोः ॥
अन्तराभवसत्त्वे च गायने खेचरेऽपि च ॥ ११ ॥
गोडुम्बः शीर्णवृन्ते स्याद्ववादन्याः फलेऽपि च ॥
भूजम्बूरपि गोधूमे विकङ्कतफलेऽपि च ॥ १२ ॥

बचतुष्कम् ॥

ललज्जिह्वो मतो हिंस्रे क्रमेलकशुनोरपि ॥
शतपर्वा च दूर्वायां भार्गवेऽस्य स्त्रियामपि ॥ १३ ॥
राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयोः स्मृता ॥

बपञ्चकम् ॥

धूलीकदम्बो नीपे स्यात्तिनिशे वरुणद्रुमे ॥ १४ ॥
गोरक्षजम्बूर्गोधूमे तथा गोरक्षतण्डुले ॥
शृगालजम्बूर्गोडुम्बे क्वापि घोण्टाफलेऽपि च ॥ १५ ॥

इति बान्तवर्गः ॥

भैककम् ॥

भः स्यान्मयूखे शुक्रे भं नक्षत्रे च प्रकीर्त्तितम् ॥
भूः पृथिव्यां स्थानमात्रे–

भद्विकम् ॥

स्वभू र्वेधसि शार्ङ्गिणि ॥ १६ ॥
शुभो योगे शुभे क्षेमे निभो व्याजसदृक्षयोः ॥
विभुः शिवे प्रभौ नित्ये शम्भुर्ब्रह्मार्हतोर्हरे ॥ १७ ॥
दम्भस्तु कैतवे कल्के डिम्भो बालिशपोतयोः ॥
जम्भो दैत्यान्तरे दम्भे जम्बीरे भक्षणेऽपि च ॥ १८ ॥
कुम्भः स्यात् कुम्भकर्णस्य सुते वेश्यासुते घटे ॥
राशिभेदे द्विपाङ्गे च कुम्भं त्रिवृति गुग्गुलौ ॥ १९ ॥
गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके ॥
जृम्भो मुखविकाशे च स्तम्भः स्थूणाजडत्वयोः ॥ २० ॥
रम्भा कदल्यप्सरसो रम्भो वैणवदण्डके ॥
सभा सामाजिके द्यूते गोष्ठीमन्दिरयोरपि ॥ २१ ॥
शोभा कान्तीच्छयोरुक्ता दम्भूः पन्नगवज्रयोः ॥
नाभिः प्राण्यङ्गजे क्षत्रे चक्रान्तचक्रवर्त्तिनोः ॥
नाभिः प्रधाने कस्तूरीमदे च क्वचिदीरितः ॥ २२ ॥

भत्रिकम् ॥

करभो मणिबन्धादिकनिष्ठान्ते तथोष्ट्रके ॥
करभः शरभस्त्वष्टापदे प्रोक्तो मृगान्तरे ॥ २३ ॥
ऋषभः स्वरभेदे स्यादष्टवर्गौषधे वृषे ॥
श्रेष्ठार्थे च वराहस्य पुच्छे रन्ध्रे च कर्णयोः ॥ २४ ॥
ऋषभी शूकशिम्ब्यां स्यान्नराकारास्त्रियामपि ॥
विधवायां शिरालायां वृषभः पुङ्गवे वृषे ॥ २५ ॥

वल्लभो दयितेऽध्यक्षे कुलीनाश्वे च वल्लभः ॥
दुर्लभः कर्चूरे न्याये दुष्प्रापे वल्लभेऽपि च ॥ २६ ॥
निकुम्भः कथितो दैत्ये कुम्भकर्णसुतेऽपि च ॥
कुसुम्भो हेमानि महारजने च कमण्डलौ ॥ २७ ॥
विष्टम्भः प्रतिबन्धे च वैदर्भे च प्रयुज्यते ॥
विश्रम्भः केलिकलहे विश्वासे प्रणये वधे ॥ २८ ॥
विष्कम्भो योगभेदे स्याद्विस्तारप्रतिबन्धयोः ॥
रूपकाङ्गप्रभेदे च बन्धभेदे च योगिनाम् ॥ २९ ॥
ककुभो रागभेदेऽपि वीणाङ्गेऽर्ज्जुनपादपे ॥
आरम्भस्तु तुरायां स्यादुद्यमे वधदर्पयोः ॥ ३० ॥
सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः ॥
गन्धोत्पले सौरभेय्यां शल्लकीमातृभेदयोः ॥ ३१ ॥
सुगन्धे च मनोज्ञे च वाच्यवत् सुरभिः स्मृतः ॥
सनाभिः सदृशे ज्ञातावात्मभूर्वेधसि स्मरे ॥ ३२ ॥
वर्षाभूः पुनर्नवायां प्लवे किञ्चुलुकेऽपि च ॥
दुन्दुभिर्दितिजे भेर्य्यामक्षबिन्दुत्रिकद्वये ॥ ३३ ॥
वैदर्भं वाक्यवक्रत्वे विदर्भश्च नृपान्तरे ॥
गर्द्दभो गन्धभेदे स्याद्गर्द्दभं कैरवे खरे ॥ ३४ ॥
गर्द्दभो गर्द्दभी क्षुद्ररोगजन्तुविशेषयोः ॥
ककुब् शोभादिशोः शास्त्रे प्रवेण्यां चम्पकस्रजि ॥ ३५ ॥

भचतुष्कम् ॥

अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि ॥
शातकुम्भं सुवर्णे स्याच्छातकुम्भोऽश्वमारके ॥ ३६ ॥

इति भान्तवर्गः ॥

—:०:—

मैककम् ॥

मः शिवे मा रमायाञ्च मा निषेधेऽव्ययं मतम् ॥

मद्विकम् ॥

किं स्याद्वितर्के प्रश्ने च क्षेपे निन्दाप्रकारयोः ॥ १ ॥
दमस्तु दमथे दण्डे कर्दमे दमनेऽपि च ॥
गमो द्यूतप्रभेदे स्यादपर्यालोचितेऽध्वनि ॥ २ ॥
द्रुमस्तरौ पारिजाते द्रुमः किम्पुरुषेश्वरे ॥
भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दाख्ये शिल्पियन्त्रके ॥ ३ ॥
हिमं शीते तुषारे च चन्दने च हिमं विदुः ॥
रमः कान्ते रमा लक्ष्म्यां रक्ताशोकद्रुमे स्मरे ॥ ४ ॥
यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च ॥
शरीरसाधनापेक्षनित्यकर्मणि चोच्यते ॥ ५ ॥
क्रमः शक्तौ परीपाट्यां क्रमश्चलनकम्पयोः ॥
क्षौममट्टे दुकूले स्यादतसीवसनेऽपि च ॥ ६ ॥
क्षेमा स्यान्मङ्गले लब्धरक्षणे चौरकेऽपि च ॥
क्षेमा धनहरीगौर्योः क्षमः ख्यातः क्षमान्विते ॥ ७ ॥
क्षितिः क्षान्तौ क्षमाख्याता हिते शक्ते च वाच्यवत् ॥
आमो रोगे तद्विशेषे आमोऽपक्वे च वाच्यवत् ॥ ८ ॥
कामः स्मरेऽभिलाषे च कामं रेतोनिकामयोः ॥
अव्ययन्त्वभ्यनुज्ञायां यामस्तु प्रहरे व्रते ॥ ९ ॥
श्यामः स्यान्मेचके वृद्धदारके हरिते घने ॥
वटद्रुमे प्रयागस्य श्यामः श्यामा तु वल्गुलौ ॥ १० ॥
अप्रसूताङ्गनायाञ्च तथा सोमलतौषधौ ॥
त्रिवृता शारिबागुन्द्रानिशाकृष्णाप्रियङ्गुषु ॥ ११ ॥
श्यामा नील्याम्पिके श्यामं मरीचे लवणान्तरे ॥

श्यामो दमनके गन्धतृणे श्यामेऽभिधेयवत् ॥ १२ ॥
गुल्मः स्तम्बे प्लीह्नि घट्टसैन्ययोः सैन्यरक्षणे ॥
गुल्मी स्यादामलक्येलापर्णिकावस्त्रवेश्मसु ॥ १३ ॥
जाल्मः स्यात् पामरे क्रूरे जाल्मोऽसमीक्ष्यकारिणि ॥
ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः ॥ १४ ॥
भीमोऽल्पवेतसे शम्भौ घोरे चापि वृकोदरे ॥
युध्मः सङ्ग्रामधनुषो रिष्मः कामवसन्तयोः ॥ १५ ॥
तोक्मं कर्णमले तोक्मो हरिते च हरिद्यवे ॥
रुक्मञ्च काञ्चने लोहे खर्म्मं क्षौमे च पौरुषे ॥ १६ ॥
धर्म्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ ॥
उपमायामहिंसायां चापे चोपनिगद्यते ॥ १७ ॥
घर्म्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि ॥
जिह्मस्तु कुटिले मन्दे जिह्मं तगरपादपे ॥ १८ ॥
सूक्ष्मं स्यात् कैतवेऽध्यात्मेऽप्यणौ सूक्ष्मोल्पकेऽन्यवत् ॥
भीष्मस्तु भीषणे रुद्रे गाङ्गेये च निशाचरे ॥ १९ ॥
शुष्मं तेजोऽर्कयोरुक्तं सूमं क्षीरे नभस्यऽपि ॥
दस्मस्तु यजमाने स्यादपि चौरे हुताशने ॥ २० ॥
रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे ॥
राघवे चाऽसितश्वेतमनोज्ञेषु च वाच्यवत् ॥ २१ ॥
रामाऽङ्गनाहिङ्गुलिन्यो रामं वास्तुककुष्ठयोः ॥
वामं सव्ये प्रतीपे च द्रविणे चाऽतिसुन्दरे ॥ २२ ॥
पयोधरे हरे कामे विद्याद्वामापि च स्त्रियाम् ॥
वामी शृगालीवडवारासभीकरभीषु च ॥ २३ ॥
पद्मः स्यात् पन्नगे व्यूहे निधौ सङ्ख्यान्तरेऽम्बुजे ॥
पद्मके बिन्दुजालेऽपि पद्मा भार्ङ्गीश्रियोरपि ॥ २४ ॥

सोमः कुबेरे पितृदेवतायां
वसुप्रभेदे च सुधाकरे च ॥
दिव्यौषधीसोमलतासमीर-
कर्पूरनीरेषु च वानरे च ॥ २५ ॥

भूमिः क्षितौ स्थानमात्रे वमिर्वान्तौ हुताशने ॥
रश्मिरंशौ प्रग्रहे च जामिः स्वसृकुलस्त्रियोः ॥ २६ ॥
नेमिस्त्रिकायां कूपस्य चक्रान्ते तिनिशद्रुमे ॥
नेमः कालेऽवधौ गर्त्ते प्राकारे कैतवेऽपि च ॥ २७ ॥
कृमिः स्यात्तृणकीटे च लाक्षायां कृमिले खरे ॥
कामिः स्यात् कामुके रत्यां होमिः सर्पिषि पावके ॥२८॥
ऊर्म्मिस्तरङ्गे पीडायां वेगभङ्गप्रकाशयोः ॥
उत्कण्ठावस्त्रसङ्कोचलेखयोरपि कीर्तिता ॥ २९ ॥
लक्ष्मीः श्रीशिवसम्पत्तिपद्माशोभाप्रियङ्गुषु ॥
किर्मी पलाशे शालायां हेमपुत्त्र्यामुदीरिता ॥ ३० ॥
शमी शक्तुफलायाञ्च शिम्बायामपि वल्गुलौ ॥
ब्राह्मी तु भारतीसोमवल्लरीब्रह्मशक्तिषु ॥ ३१ ॥
फाञ्जिकापङ्कजटिकाशाकभेदेषु च स्मृता ॥
समा वर्षे समं तुल्ये साधौ च सदृशेऽन्यवत् ॥ ३२ ॥
सीमा घोटे स्थितौ क्षेत्रे मर्यादावेलयोरपि ॥
क्षुमाऽतसीनालिकयोर्नृनाम्नि परमद्युतौ ॥ ३३ ॥
उमाऽतसीहैमवतीहरिद्राकीर्त्तिकान्तिषु ॥
रुमा सुग्रीवदारेषु विशिष्टे लवणाकरे ॥ ३४ ॥

मत्रिकम् ॥

उत्तमा दुग्धिकायां स्यादुत्कृष्टे चोत्तमेऽन्यवत् ॥
मध्यमः स्यात् स्वरे मध्ये मध्यदेशे च भेदजे ॥ ३५ ॥

वाच्यवन्मध्यमातूक्ता राकादृष्टरजःस्त्रियोः ॥
कर्णिका त्र्यक्षरच्छन्दःकरमध्याङ्गुलीषु च ॥ ३६ ॥
अधमः कुत्सिते न्यूने प्रक्रमोऽवसरे क्रमे ॥
विक्रमः क्रान्तिमात्रे स्याद्विक्रमः शक्तिसम्पदि ॥ ३७ ॥
सङ्क्रमः क्रमणे सम्पद्वारिसञ्चारयन्त्रके ॥
निष्क्रमो बुद्धिसम्पत्तौ निर्गमे दुष्कुलेऽपि च ॥ ३८ ॥
आगमः शास्त्र आयाते विभ्रमो भ्रान्तिहावयोः ॥
सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि ॥ ३९ ॥
विद्रुमो रत्नवृक्षेऽपि प्रवाले पल्लवेऽपि च ॥
आश्रमो ब्रह्मचर्यादिचतुष्केऽपि मठेऽपि च ॥ ४० ॥
सत्तमश्चान्यवत् पूज्ये श्रेष्ठसाधीयसोरपि ॥
नियमो मन्त्रणायां स्यात् प्रतिज्ञायाञ्च संयमे ॥ ४१ ॥
निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे ॥
नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च ॥ ४२ ॥
कलमो लेखनीचौरशालिकाक्षरकेषु च ॥
तलिमं कुट्टिमे तल्पे चन्द्रहासे वितानके ॥ ४३ ॥
परमं स्यादनुज्ञातेऽप्यव्ययं परमः परे ॥
परमं स्यात् प्रधानाद्योरोङ्कारेऽपि तथोच्यते ॥ ४४ ॥
कुसुमं पुष्पफलयोः स्त्रीरजोनेत्ररोगयोः ।
कृत्रिमं रचिते प्रोक्तं सिह्लके लवणान्तरे ॥ ४५ ॥
सुषमं चारुसमयोः सुषमा परमद्युतौ ॥
सुषीमः शिशिरे चारौ सुषीमः पन्नगान्तरे ॥ ४६ ॥
पञ्चमो रागभेदे स्यात् पञ्चानामपि पूरणे ॥
पञ्चमश्चतुरे हृद्ये पञ्चमी पाण्डवस्त्रियाम् ॥ ४७ ॥
गौतमः शाक्यसिंहे च मुनिभेदेऽथ गौतमी ॥

रोचन्याम्बिकायाश्च दाडिमः करकैलयोः ॥ ४८ ॥
गोधूमो नागरङ्गे स्याद्भेषजव्रीहिभेदयोः ॥
व्यायामो दुर्गसञ्चारे व्यायामः पौरुषेऽपि च ॥ ४९ ॥
विलोमस्तु प्रतीपे स्याद् भुजङ्गे वरुणे शुनि ॥
आमलक्यां विलोमी च विलोमं चारुघट्टके ॥ ५० ॥
गोलोमी श्वेतदूर्वायां षड्ग्रन्थावारयोषितोः ॥
प्रतिमा दन्तबन्धे स्याद्गजस्यानुकृतावपि ॥ ५१ ॥

मचतुष्कम् ॥

प्लवङ्गमः कपौ भेकेऽनुपमः सुन्दरेऽन्यवत् ॥
सुप्रतीकस्य योषायां भवेदनुपमाऽपि च ॥ ५२ ॥
अभ्यागमोऽन्तिके घाते विरोधाभ्युद्गमादिषु ॥
यातयामस्तु जीर्णे स्यात् परिभुक्तोज्झितेषु च ॥ ५३ ॥
दण्डयामस्तु कीनाशे दिवसे कुम्भसम्भवे ॥
सार्वभौमस्तु दिङ्नागे सार्वपृथ्वीपतावपि ॥ ५४ ॥
पराक्रमो विक्रमे स्यात् सामर्थ्योद्योगयोरपि ॥
उपक्रमः स्यादुपधाचिकित्सारम्भविक्रमे ॥ ५५ ॥
जलगुल्मो जलावर्त्ते कच्छपे जलचत्वरे ॥
महापद्मः स्मृतो नागनिधिसङ्ख्यान्तरेषु च ॥ ५६ ॥

मपञ्चकम् ॥

अभ्युपगमः स्वीकारे समीपागमनेऽपि च ॥
नक्षत्रनेमिः शीतांशौ रेवत्याश्च ध्रुवे क्वचित् ॥ ५७ ॥

इति मान्तवर्गः

—:०:—

यैककम् ॥

यः सर्वनामानिलयोर्ज्या मौर्वीमातृभूमिषु ॥

द्युरग्नौ दिवसेऽपि स्याद् द्यौः स्वर्गसुरवर्त्मनोः ॥ १ ॥

यान्तिकम् ॥

जयो जयन्तौ विजये जया दुर्गाग्निमन्थयोः ॥
जयन्ती तिथिभेदोमासखीपथ्यासु च स्मृता ॥ २ ॥
चयः समूहे प्राकारे मूलबन्धे समाहृतौ ॥
नयो नीतौ द्यूतभेदे शयः शय्याहिपाणिषु ॥ ३ ॥
भयं प्रतिभये घोरे प्रसूने कुब्जकस्य च ॥
मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च ॥ ४ ॥
लयो विनाशे संश्लेषे साम्ये तौर्य्यत्रिकस्य च ॥
स्मयो गर्वेऽद्भुते गेयो गातव्ये गायनेऽपि च ॥ ५ ॥
क्षयो रोगान्तरे वेश्मकल्पान्तापचयेष्वपि ॥
प्रियो धवे सौहृद्ये च वृद्धिनामौषधेऽपि च ॥ ६ ॥
कायः कदैवते मूर्त्तौ सङ्घे लक्ष्यस्वभावयोः ॥
कायो मनुष्यतीर्थेऽपि सायः काण्डापराह्णयोः ॥ ७ ॥
दायो दाने यौतकादिधने सोल्लुण्ठभाषणे ॥
विभक्तपितृद्रव्यश्च दायमाहुर्मनीषिणः ॥ ८ ॥
प्रायश्चाऽनशने मृत्यौ तुल्यबाहुल्ययोरपि ॥
पेयं पातव्यपयसोः पेया श्राणोत्थमण्डयोः ॥ ९ ॥
स्थेयो विवादस्य पदनिर्णेतारि पुरोहिते ॥
पीयुः काले रवौ घूके ययुः क्रतुहये हये ॥ १० ॥
मयुस्तुरङ्गवदने मृगेऽपि मयुरुच्यते ॥
मन्युः क्रोधे क्रतौ दैन्ये मृत्युर्मरणदेवयोः ॥ ११ ॥
दस्युः स्तेने च शत्रौ च जन्युः प्राण्यग्निधातृषु ॥
वन्यं वनभवे वन्या वनवारिसमूहयोः ॥ १२ ॥
जन्यं हट्टे परीवादे संयुजे जनके पुनः ॥

जन्यः स्याच्छयनीये च जन्या मातृसखीमुदोः ॥ १३ ॥
जन्यो वरधूज्ञातिप्रियभृत्यहितेऽपि च ॥
शून्याख्या निर्ज्जने नल्यामन्यो भिन्नासमानयोः ॥ १४ ॥
पश्यं पानीयकेऽलिन्दे पूज्यः श्वसुरवन्द्ययोः ॥
हार्यो बिभीतकतरौ हर्तव्ये हार्य्यमन्यवत् ॥ १५ ॥
वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि ॥
आर्यः साधौ सौविदल्लेऽप्यार्योमावृत्तभेदयोः ॥ १६ ॥
अर्यः स्वामिनि वैश्ये च कार्यं हेतौ प्रयोजने ॥
सूर्यः सूरे तत्प्रियायां सूर्या स्यादोषधावपि ॥ १७ ॥
शौर्य्यं चारभटीशक्त्योर्वर्यः स्मरवरेण्ययोः ॥
गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः ॥ १८ ॥
सह्यः शैलान्तरारोग्यसोढव्येषु प्रचक्ष्यते ॥
गुह्यं पुरीषमार्गेऽपि भवेदस्वैरपक्षयोः ॥ १९ ॥
गृह्या च शाखानगरे गृह्यश्छेकेऽप्युदीरितः ॥
योग्यः प्रवीणे योग्यार्होपायशक्तेषु चान्यवत् ॥ २० ॥
योग्यमुद्धाख्यभैषज्ये योग्याभ्यासार्कयोषितोः ॥
भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि ॥ २१ ॥
पाठ्यं पिण्डाख्यलवणे यवक्षारेऽपि दृश्यते ॥
पथ्यं हिते हरीतक्यां पथ्यापथ्योरथोद्वहे ॥ २२ ॥
रथ्या रथौघे विशिखा वर्त्तनीचत्वरेषु च ॥
अथ्यं शिलाजतुन्यर्थे बुधे न्याय्ये तु वाच्यवत् ॥ २३ ॥
ग्राम्यो जनेऽन्यवद्ग्राम्यमश्लीलरथवन्धयोः ॥
सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते ॥ २४ ॥
इल्वलासु च सौम्याः स्युर्नीचे बोध्ये च वाच्यवत् ॥
रम्यं मनोरमे रम्या रात्रौ रम्यश्च चम्पके ॥ २५ ॥

सङ्ख्यं समिति सङ्ख्या स्यादेकत्वादिविचारयोः ॥
मध्यं न्याय्येऽवकाशे चावलग्ने लग्नकेऽधमे ॥ २६ ॥
मेध्यं शुचौ मेदुरे च वाच्यवन्मेध्यमाश्रमे ॥
साध्याऽभिख्या साधनीये योगे गणदैवतयोः ॥ २७ ॥
वन्ध्योऽफलद्रुमे वन्ध्या त्वप्रजातस्त्रियामपि ॥
हृद्यं धवलजीरे च हृत्प्रिये हृद्भवेऽपि च ॥ २८ ॥
वशकृद्वेदमन्त्रे च हृद्यं वृद्धाख्यभेषजे ॥
चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत् ॥ २९ ॥
पद्यं श्लोके स्रुतौ पद्या पद्युः शूद्रे निगद्यते ॥
पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः ॥ ३० ॥
धिष्ण्यं पद्मानि नक्षत्रे स्थाने शक्तौ च पावके ॥
धान्यं व्रीहिसुधान्याके धन्यो धनवति स्मृतः ॥ ३१ ॥
धन्या धात्र्यामलक्योश्च कुड्यं भित्तौ विलेपने ॥
काव्यं ग्रन्थे गृहे काव्यः काव्या स्यात् पूतनाधियोः ॥३२॥
चव्यन्तु चविके चव्या शतपर्वोग्रगन्धयोः ॥
गव्यश्च गोहिते गव्यं तथा क्षीरादिके गवाम् ॥ ३३ ॥
रागद्रव्ये च गव्या तु गोकुले कथिता बुधैः ॥
द्रव्यं स्याद् द्राविणे भव्ये पृथिव्यादौ च पित्तले ॥ ३४ ॥
भेषजे च निवेद्ये च जतुद्रुमविकारयोः ॥
भव्यं सत्ये शुभे चाऽथ भेद्यवद्योग्यभाविनोः ॥ ३५ ॥
कर्मरङ्गतरौ भव्यो भव्या करिकणोमयोः ॥
दिव्यं लवङ्गके दिव्यं वल्गौ दिविभवेऽन्यवत् ॥ ३६ ॥
आमलक्यां स्मृता दिव्या सव्यं वामप्रतीकयोः ॥
सेव्यं प्रोक्तमुशीरे च सेवार्हे पुनरन्यवत् ॥ ३७ ॥
गोप्यो दासीसुते गोप्यो रक्षणीयेऽभिधेयवत् ॥

रूप्यं स्यादाहते स्वर्णरजते रजतेऽपि च ॥ ३८ ॥
रूप्यं प्रशस्तरूपे तु वाच्यवत् समुदीरितम् ॥
इभ्य आढ्ये करेण्वान्तु भवेदिभ्या तु शल्लकौ ॥ ३९ ॥
लभ्यं युक्ते च लब्धव्ये चार्घ्यमर्घार्थयोग्ययोः ॥
चित्यं मृतकचैत्ये स्याच्चित्या मृतचितावपि ॥ ४० ॥
चैत्यमायतने बुद्धबिम्बे चोद्देशपादपे ॥
दैत्योऽसुरे सुरायान्तु दैत्या चण्डौषधावपि ॥ ४१ ॥
भृत्यो दासे भृतौ भृत्या दन्त्यो दन्तभवेऽधमे ॥
सत्यश्च शपथे तथ्ये कृते तद्वति वाच्यवत् ॥ ४२ ॥
तपोलोकात् परे सत्यो नित्यन्तु सतते ध्रुवे ॥
मूल्यन्तु वेतने वस्त्रे माल्यं मालाप्रसूनयोः ॥ ४३ ॥
बल्यं प्रधाने धातौ स्याद् बल्यं बलकरेऽपि च ॥
कल्यं सज्जे प्रभाते च कल्यो नीरोगदक्षयोः ॥ ४४ ॥
कल्या कल्याणवाचि स्यात् कादम्बर्य्यामपि स्मृता ॥
शल्यं शङ्कौ शरे वंशकम्बिकायाञ्च तोमरे ॥ ४५ ॥
शल्यस्तु कथितः श्वाविन्मदनद्रुमयोरपि ॥
कुल्यः कुलोद्भवेऽमात्ये कुलस्यातिहितेऽपि च ॥ ४६ ॥
कुल्यं स्यात् कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च ॥
पयः प्रणालीसरितोः कुल्याजीवन्तिकौषधौ ॥ ४७ ॥
वेश्यं वेश्यागृहे वेश्या गणिकायामुदीरिता ॥
आस्यं वक्त्रे वक्त्रमध्ये स्थितावास्या च विश्रुता ॥ ४८ ॥
लास्यं तौर्यत्रिके नाट्ये शस्ये शस्ते फले गुणे ॥
कश्यं मद्ये तुरङ्गाणां कश्यं मध्यकशार्हयोः ॥ ४९ ॥
कांस्यन्तु तैजसद्रव्ये वाद्यभित्पानपात्रयोः ॥
मत्स्यो मीनान्तरे मीने विराटाभिख्ययादवे ॥ ५० ॥

तिष्यः पुष्ये कलौ धात्र्यां तिष्या पुष्यवदिष्यते ॥
दूष्यन्तु दूषणीये स्याद् दूष्यं वस्त्रे च तद्गृहे ॥ ५१ ॥
वीक्ष्यन्तु विस्मये दृश्ये वीक्ष्यो लासकवाजिनोः ॥
तार्क्ष्यः स्यादश्वकर्णाख्यवृक्षे रथतुरङ्गयोः ॥ ५२ ॥
तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे ॥
लक्ष्यं शरव्ये सङ्ख्यायां लक्ष्यं छद्मनि सम्मतम् ॥ ५३ ॥
याम्याऽवाच्यां भरण्याञ्च याम्योऽगस्त्ये च चन्दने ॥
इज्या दानेऽध्वरेऽर्चायां सङ्गे चेज्यो गुरौ मतः ॥ ५४ ॥
व्रज्या पर्यटने प्रोक्ता वर्गप्रस्थानयोरपि ॥
शय्या तल्पे शब्दतल्पे स्यान्माया शाम्बरीधियोः ॥ ५५ ॥
कन्या कुमारिकानार्योरोषधीराशिभेदयोः ॥
कक्ष्या बृहन्तिकायां स्यात् कक्ष्या मध्येभबन्धने ॥ ५६ ॥
हर्म्यादीनां प्रकोष्ठे च कृत्यं विद्विष्टकार्ययोः ॥
कृत्याऽपि देवताभेदे कृत्या स्तव्यादिषु स्मृता ॥ ५७ ॥
विन्ध्या तु शैलवल्याञ्च विन्ध्यो रुक्शैलभेदयोः ॥
सन्ध्या नदीकालभिदोश्चिन्तामर्यादयोरपि ॥ ५८ ॥
प्रतिज्ञायाञ्च सन्धाने सन्ध्या तु कुसुमान्तरे ॥
छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः ॥ ५९ ॥
पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्मृता ॥
क्रिया कर्मणि चेष्टायां करणे सम्प्रधारणे ॥ ६० ॥
आरम्भोपायशिक्षार्थचिकित्सानिष्कृतिष्वपि ॥
माया दम्भे कृपायाञ्च मायः पीताम्बरेऽम्बरे ॥
त्रयी त्रिवेद्यां त्रितये पुरन्ध्र्यां सुमतावपि ॥ ६१ ॥

यत्रिकम् ॥

विजयस्तु जये पार्थे गौर्यान्तु विजया तिथौ ॥

विनयं प्रणतौ प्राहुः शिक्षायां विनया मता ॥ ६२ ॥
विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च ॥
गोचरे च प्रबन्धाद्ये यस्य ज्ञातस्तु तत्र च ॥ ६३ ॥
अनयो व्यसने दैवे अशुभे चापदि स्मृतः ॥
सन्नयः समवायेऽपि पृष्ठस्थायिबलेऽपि च ॥ ६४ ॥
प्रणयः प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपि ॥
वलयः कण्ठरोगे स्याद्वलयं कङ्कणेऽपि च ॥ ६५ ॥
मलयो देश आरामे शैलांशे पर्वतान्तरे ॥
मलया त्रिवृतायां स्याद्विस्मयोद्भुतगर्वयोः ॥ ६६ ॥
प्रलयो मृत्युकल्पान्तमूर्च्छार्थेषु प्रयुज्यते ॥
अभयं स्यादुशीरे च पथ्यायामभयं स्त्रियाम् ॥ ६७ ॥
निर्भये वाच्यवत् प्रोक्तं हृदयं मानसोरसोः ॥
स्पृक्कायामुदयः पूर्वपर्वते चोन्नतावपि ॥ ६८ ॥
प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु ॥
प्रथितत्वे सनादौ चाऽप्यधीनज्ञानयोरपि ॥ ६९ ॥
अतिक्रमे च दण्डे च विनाशे दोषकृच्छ्रयोः ॥
आशयः स्यादभिप्राये मानसाधारयोरपि ॥ ७० ॥
निकायो निलये लक्ष्ये संहतानां समुच्चये ॥
एकार्थभाजि निवहे परमात्मनि चेष्यते ॥ ७१ ॥
क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च ॥
अन्यदेहचिकित्स्ये चाऽसाध्यरोगे च जानते ॥ ७२ ॥
कषायो रसभेदे स्यादङ्गरागे विलेपने ॥
निर्यासेऽपि कषायोऽथ सुरभौ लोहितेऽन्यवत् ॥ ७३ ॥
कुलायः पक्षिनिलयस्थानयोर्नीडवन्मतः ॥
उपायः सामभेदादावुपायः स्यादुपागतौ ॥ ७४ ॥

पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे ॥
संस्त्यायः सन्निवेशे च संस्थाने विश्रुतावपि ॥ ७५ ॥
व्यवायः सुरतेऽन्तर्द्धौ व्यवायं तेजसि स्मृतम् ॥
शौलयं शतपुष्पायामाहुः शाल्युद्भवोचिते ॥ ७६ ॥
शैलेयं सिन्धुलवणे तालपर्ण्याश्च सिन्धुजे ॥
चञ्चरीके तु शैलेयो गाङ्गेयो जाह्नवीसुते ॥ ७७ ॥
कशेरुस्वर्णमुस्तेषु गाङ्गेयमिति कथ्यते ॥
चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेशरे ॥ ७८ ॥
कालेयो दैत्यभेदे स्यात् कालेयं कालखण्डके ॥
बालेयोऽङ्गारवल्लर्य्यां खरे बालहिते मृदौ ॥ ७९ ॥
आत्रेयो मुनिभेदे स्यादात्रेयी सरिदन्तरे ॥
आत्रेयी पुष्पवत्याश्च पानीयं पेयवारिणोः ॥ ८० ॥
ऐणेयमेणचर्मादौ रतबन्धान्तरे स्त्रियाः ॥
अश्वीयमश्वसङ्घातेऽश्वीयमश्वहितेऽन्यवत् ॥ ८१ ॥
इन्द्रियश्च हृषीके स्यादिन्द्रियं रेतसि स्मृतम् ॥
जघन्यं चरमे शिश्ने जघन्यं गर्हितेऽन्यवत् ॥ ८२ ॥
वदान्यो दानशौण्डे स्याद्वदान्यश्चारुभाषिणि ॥
पर्जन्यो मेघशब्दे स्याद्धनदम्बुदशक्रयोः ॥ ८३ ॥
ब्रह्मण्यो ब्रह्मसाधौ स्याद्ब्रह्मण्यश्च शनैश्चरे ॥
ब्राह्मण्यं ब्राह्मणत्वे स्यात् समूहेऽपि द्विजन्मनाम् ॥ ८४ ॥
शीर्षण्यमाहुर्विशदकेशशीर्षकयोरपि ॥
हिरण्यमक्षयद्रव्ये वराटे स्वर्णरेतसोः ॥ ८५ ॥
सौकर्य्यं स्यादनायासे क्रियायां सूकरस्य च ॥
श्वशुर्य्यो देवरे श्यालेऽप्यहार्य्यः स्थिरशैलयोः ॥ ८६ ॥
प्रकीर्य्यः पूतिकरजे विनिकीर्णे तु वाच्यवत् ॥

सौरभ्यमाहुः सौगन्धे चारुत्वे गुणगौरवे ॥ ८७ ॥
नेपथ्यं रङ्गभूमौ स्यान्नेपथ्यश्च प्रसाधने ॥
आतिथ्यमातिथेये स्यादातिथ्यश्चातिथावपि ॥ ८८ ॥
सामर्थ्यं योग्यताशक्त्योरपत्यं पुत्रयोर्मतम् ॥
कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च ॥ ८९ ॥
लौहित्यः सागरे व्रीहावादित्यस्त्रिदशे रवौ ॥
पौलस्त्यो रावणे श्रीदेऽप्यौचित्यं सत्ययोग्ययोः ॥ ९० ॥
प्रसव्यमनुकूले स्यात् प्रतिकूले च वाच्यवत् ॥
अवध्यमवधार्य्ये स्यादनर्थकवचस्यपि ॥ ९१ ॥
प्रणाय्योऽसम्मते प्रोक्तोऽप्यभिलाषविवर्जिते ॥
शाण्डिल्यो मुनिभेदे स्यान्मालूरे पावकान्तरे ॥ ९२ ॥
मङ्गल्यस्त्रायमाणे स्याद्बिल्वेऽश्वत्थे मसूरके ॥
मङ्गल्यं दध्नि मङ्गल्यो मनोज्ञे त्वभिधेयवत् ॥ ९३ ॥
मङ्गल्या रोचनायाश्च प्रियङ्गुशतपुष्पयोः ॥
अधः पुष्पीशङ्खपुष्पीशमीशुक्लवचासु च ॥ ९४ ॥
अधृष्यस्तु प्रगल्भे स्यादधृष्या निम्नगाभिदि ॥
पारुष्यं परुषत्वे स्याद्वने शक्रस्य गीष्पतौ ॥ ९५ ॥
पारुष्योऽथ भुजिष्यः स्यात् सहाये हस्तसूत्रके ॥
स्वतन्त्रे च भुजिष्या तु दासीगाणिकयोर्मता ॥ ९६ ॥
चक्षुष्यः केतके पुण्डरीकवृक्षे रसाञ्जने ॥
कुलत्थिकासुभगयोश्चक्षुष्योऽक्षिहितेऽन्यवत् ॥ ९७ ॥
जटायुर्गुग्गुलुतरौ जटायुर्विहगान्तरे ॥
ऊर्णायुः क्षणभङ्गे स्यान्मेषकम्बलमेषयोः ॥ ९८ ॥
देवयुर्धार्मिके ख्यातो देवयुर्लोकयात्रिके ॥
मृगयुर्ब्रह्मणि प्रोक्तो गोमायुव्याधयोरपि ॥ ९९ ॥

भुवन्युर्ज्वलने भानौ भुवन्युः शशलाञ्छने ॥
शरण्युर्वारिदे वाते क्षिपन्युः सुरभौ तनौ ॥ १०० ॥
तपस्या व्रतचर्यायां तपस्यो मासि फाल्गुने ॥
रहस्या निम्नगाभेदे गोपनीये तु वाच्यवत् ॥ १०१ ॥
पयस्या क्षीरकाकोल्यां पयोहितभवेऽन्यवत् ॥
पयस्या दुग्धिकायाश्च स्वर्णक्षीर्याश्च कथ्यते ॥ १०२ ॥
स्यादहल्याऽप्सरोभेदे गौतमस्य च योषिति ॥
विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च ॥ १०३ ॥
अभिख्या कीर्त्तियशसोरभिख्यानामशोभयोः ॥
द्वितीया तिथिभित्पत्न्योः पूरण्यामपि च द्वयोः ॥ १०४ ॥
नादेयी नागरङ्गे स्याज्जयायां जलवेतसे ॥
भूमिजम्ब्वां जवायां च काङ्गुष्ठे च समीक्ष्यते ॥ १०५ ॥

यचतुष्कम् ॥

भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः ॥
स्मृतः समुदयो वृन्दे संयुगे समुपक्रमे ॥ १०६ ।
प्रतिश्रयः सभायां स्यादाश्रयेऽपि प्रतिश्रयः ॥
समुच्छ्रयः समुत्सेधे विरोधेऽपि समुच्छ्रयः ॥ १०७ ॥
हिरण्मयो लोकधातौ स्यात् सुवर्णमयेऽन्यवत् ॥
अवश्यायो हिमे गर्वे समुदायो गणे युधि ॥ १०८ ॥
परिधायो जलस्थाने परिच्छदनितम्बयोः ॥
सम्परायः समीके स्यादापदुत्तरकालयोः ॥ १०९ ॥
निरामयोऽन्यवत् कल्ये स्याद्विडिके निरामयः ॥
समाह्वयः स्यात् सङ्ग्रामे द्यूते च पशुपक्षिभिः ॥ ११० ॥
महालयो विहारे स्यात्तीर्थे च परमात्मनि ॥
रौहिणेयो भवेद्वत्से रेवतीरमणे बुधे ॥ १११ ॥

पौरुषेयो विकारे स्यात् पुरुषस्य पदान्तरे ॥
पुंसः समूहवधयोः पुरुषेण कृतेऽपि च ॥ ११२ ॥
भागधेयं स्मृतं भाग्ये भागप्रत्यययोरपि ॥
बिलेशयो मूषिके स्याद् भुजङ्गेऽपि बिलेशयः ॥ ११३ ॥
जलाशयमुशीरे च जलाधारे जलाशयः ॥
चन्द्रोदयो विताने स्यात्तथा चन्द्रोदयोषधौ ॥ ११४ ॥
फलोदयः स्यात् त्रिदिवे लाभेऽपि च फलोदयः ॥
महोदयः कान्यकुब्जेऽप्याधिपत्यापवर्गयोः ॥ ११५ ॥
स्थूलोच्चयस्त्वऽसाकल्ये गण्डोपलकरण्डयोः ॥
गजानां मध्यमगतौ स्थूलोच्चय उदाहृतः ॥ ११६ ॥
धनञ्जयोऽर्ज्जुने वह्नौ ककुभे देहमारुते ॥
नागान्तरे चाऽपसव्यं दक्षिणप्रतिकूलयोः ॥ ११७ ॥
मार्ज्जारीयः स्मृतः शूद्रे बिडाले कायशोधने ॥
तण्डुलीयः शाकभेदे विडङ्गतरुताप्ययोः ॥ ११८ ॥
तृणशून्यं मल्लिकायां केतक्याश्च फले मतम् ॥
महामूल्यं महार्घे स्यात् पद्मरागमणावपि ॥ ११९ ॥
अधःशय्या मृतौ भूमिशय्यायाम्पितृकानने ॥
उपकार्य्या वस्त्रसद्मन्युपकारोचितेऽन्यवत् ॥ १२० ॥

यपञ्चकम् ॥

दुग्धतालीयमित्येतद् दुग्धाम्रे दुग्धफेणके ॥
भवेत्प्रवचनीयाख्या प्रवाच्ये च प्रवक्तरि ॥ १२१ ॥
कालानुसार्य्यं कालीये शैलेये शिंशपाद्रुमे ॥
वृषाकपायी श्रीगौर्य्योर्जीवन्त्याञ्च शतावरौ ॥ १२२ ॥

यषट्कम् ॥

प्रत्युद्गमनीयमुपस्थेये स्याच्च धौतांशुकद्वये ॥

विश्वक्सेनप्रिया लक्ष्म्यां त्रायमाणौषधावपि ॥ १२३ ॥

इति यान्तवर्गः ॥

—:०:—

रैककम् ॥

रः पावके च तीक्ष्णे च राः स्मृतः स्वर्णवित्तयोः ॥
स्रुः स्रवे निर्झरे चाऽपि रुः स्वर्णे कामरूपिणि ॥ १ ॥
श्रीर्वेशरचनाशोभाभारतीसरलद्रवे ॥
लक्ष्म्यां त्रिवर्गसम्पत्तौ वेशोपकरणे मता ॥ २ ॥

रद्विकम् ॥

अरं शीघ्रे च च चक्राङ्गे शीघ्रगे पुनरन्यवत् ॥
करो वर्षोपले पाणौ शुण्डाप्रत्ययरश्मिषु ॥ ३ ॥
खरः स्याद्गर्दभे दैवताद्ये तीक्ष्णाग्रकेऽपि च ॥
गरो व्याधावुपविषे विषे च करणे गरम् ॥ ४ ॥
वरो द्यूतप्रभेदे स्याच्चारजङ्गमयोश्चले ॥
नरं तु रामकर्पूरे नरोऽजे मानवेऽर्ज्जुने ॥ ५ ॥
परः स्यादुत्तमानात्मवैरिदूरेषु केवले ॥
परमव्ययमिच्छन्ति भरोऽतिशयभारयोः ॥ ६ ॥
वरोऽभीष्टे देवतादेर्वरो जामातृषिङ्गयोः ॥
श्रेष्ठेऽन्यवत् परिवृतौ वरं काश्मीरजे मतम् ॥ ७ ॥
त्रिफलायां वरा प्रोक्ता शतावर्य्यां वरी वरम् ॥
अव्ययन्तु मनागिष्टे सरो दध्यग्रबाणयोः ॥ ८ ॥
स्वरोऽकारादिमात्रासु मध्यमादिषु च ध्वनौ ॥
उदात्तादिष्वपि प्रोक्तः स्वरो नासासमीरणे ॥ ९ ॥
शरं नीरे शरः काण्डे शरस्तेजनकेऽपि च ॥
धरस्तु शैले कार्पासतूलके कमठाधिपे ॥

धरा मेधसि भूम्याश्च स्त्रीणां गर्भाशयेऽपि च ॥ १० ॥
क्षरं नीरे क्षरो मेघे दरः साध्वसगर्त्तयोः ॥
कन्दरे तु दरीमाहुरीषदर्थे दराव्ययम् ॥ ११ ॥
क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे ॥
पुरं पाटलिपुत्रे स्याद्गृहोपरिगृहे पुरम् ॥ १२ ॥
पुरं पुरि शरीरे च गुग्गुलौ कथितः पुरः ॥
पुराऽव्ययं पूर्वकाले खुरः कोलदले शफे ॥ १३ ॥
सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित् ॥
कारो वधे निश्चये च बलौ यत्ने यतावपि ॥ १४ ॥
कारस्तुषारशैले च कारा दूत्यां प्रसेवके ॥
बन्धने बन्धनागारे हेमकारिकयोरपि ॥ १५ ॥
चारः प्रियालवृक्षे स्याद्गतौ बन्धापसर्पयोः ॥
पारम्परतटे प्रान्ते पारी पात्रीतडागयोः ॥ १६ ॥
गर्गरीपूरयोः पारी पादरज्ज्वाश्च दन्तिनः ॥
वारः सूर्यादिदिवसे वारोऽवसरवृन्दयोः ॥ १७ ॥
कुब्जवृक्षे हरेर्वारं द्वारे मद्यस्य भाजने ॥
तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके ॥ १८ ॥
तारश्च रजतेऽप्युच्चस्वरेऽप्यन्यवदीरितम् ॥
ऋक्षाक्षिमध्ययोस्तारा सुग्रीवगुरुयोषितोः ॥ १९ ॥
बुद्धदेव्यां मता तारा शारः शबलवातयोः ॥
भारस्तु वीवधे स्वर्णपलानामयुतद्वये ॥ २० ॥
मारो मृत्यौ वृषेऽनङ्गे मारी चण्ड्यां जनक्षये ॥
स्फारः स्याद्विकटे स्फारः कनकादेश्च बुद्‌बुदे ॥ २१ ॥
क्षारो रसान्तरे धूर्त्ते लवणे काचभस्मनोः ॥
हारो मुक्तावलौ युद्धेऽप्यारः क्षितिसुतेऽर्कजे ॥

आरा चर्म्मप्रभेदिन्यां नारस्तर्णकनीरयोः ॥ २२ ॥

सारो बले मज्जनि च स्थिरांशे
न्याय्ये च नीरे च धने च सारम् ॥
वरेऽन्यवत् सारमुदाहरन्ति
द्वारं पुनर्निर्गमनेऽप्युपाये ॥ २३ ॥

पूरो जलप्रवाहे स्याद् व्रणसंशुद्धिखाद्ययोः ॥
चिरन्तु गोस्तने हस्ते चूडायां सीसकेऽपि च ॥ २४ ॥
क्रूरस्तु कठिने घोरे नृशंसे त्वऽभिधेयवत् ॥
सूरश्चारभटे सूर्य्ये चोरश्चौरसुगन्धयोः ॥ २५ ॥
तीरं तटे त्रपौ तीरः सीरस्तिग्मकरे हले ॥
चीरी कच्छुरिकाझिल्योः स्वैरः स्वच्छन्दमन्दयोः ॥२६॥
जीरः खड्गे वणिग्द्रव्ये मीरस्तोयदशैलयोः ॥
क्षीरं नीरे च दुग्धे च कीरो जनपदे शुके ॥ २७ ॥
गौरः पीतेऽरुणे श्वेते विशुद्धे चाऽभिधेयवत् ॥
गौरन्तु विशदे पद्मकेशरे सितसर्षपे ॥ २८ ॥
गौरः शशिनि गौरी तु नग्नकन्योमयोः स्मृता ॥
रोचनी रजनीपिङ्गाप्रियङ्गुवसुधासु च ॥ २९ ॥
नदीभेदेऽपि गौरी स्याद्वरुणस्य च योषिति ॥
पौरन्तु कत्तृणे पौरः स्मृतः पुरभवेऽन्यवत् ॥ ३० ॥
वेरं शरीरे काश्मीरे वेरं वातिङ्गणेऽपि च ॥
घोरं भीमे हरे घोरष्टारो लङ्गतुरङ्गयोः ॥ ३१ ॥
होरा लग्नेऽपि राश्यर्द्धे शास्त्ररेखाभिदोरपि ॥
हीरा पिपीलिकालक्ष्म्योर्हीरः शङ्करवज्रयोः ॥ ३२ ॥
गोत्रं नाम्नि कुले क्षेत्रे कानने चित्तवर्त्मनोः ॥
सम्भावनीयबोधेऽपि गोत्रः क्षोणीधरे मतः ॥ ३३ ॥

गोसमूहभुवोर्गोत्रा गात्रमङ्गे कलेवरे ॥
स्तम्बेरमाग्रजङ्घाया विभागेऽपि समीरितम् ॥ ३४ ॥
पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणाम् ॥
पात्रञ्च भाजने योग्ये पात्रं तीरद्वयान्तरे ॥ ३५ ॥
पात्रं स्रुवादौ पर्णेऽपि राजमन्त्रिणि चेष्यते ॥
पोत्रं वस्त्रे मुखाग्रे च शूकरस्य हलस्य च ॥ ३६ ॥
चित्रं स्यादद्भुतालेख्यातिलकेषु विहायसि ॥
चित्राऽऽखुपर्णीगोदुग्धीसुभद्रादन्तिकासु च ॥ ३७ ॥
ऋक्षाप्सरोऽहिभेदेषु कर्बुरे चाभिधेयवत् ॥
चैत्रं मृतकचित्ये स्याच्चैत्रो मासाद्रिभेदयोः ॥ ३८ ॥
वृत्रो रिपौ घने ध्वान्ते शैले शक्रे च दानवे ॥
सत्रमाच्छादने यज्ञे सदादाने च कैतवे ॥ ३९ ॥
सूत्रन्तु सूचनायां स्यात् सूत्रं तन्तुव्यवस्थयोः ॥
मित्रं सुहृदि मित्रोऽर्के शास्त्रं ग्रन्थनिदेशयोः ॥ ४० ॥
मात्रं चाऽवधृतौ कार्त्स्न्ये मात्रा कर्णविभूषणे ॥
अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे ॥ ४१ ॥
शस्त्रं लोहास्त्रयोः शस्त्री छुरिकायाञ्च विश्रुता ॥
अस्त्रं प्रहरणे चापे वक्त्रं छन्दोऽन्तरे मुखे ॥ ४२ ॥
नेत्रं मन्थिगुणे वस्त्रे तरुमूले विलोचने ॥
नेत्रं रथे च नाड्याञ्च नेत्रो नेतरि वाच्यवत् ॥ ४३ ॥
क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः ॥
रेत्रं रेतसि पीयूषे पटवासेऽपि सूतके ॥ ४४ ॥
मन्त्रो वेदप्रभेदे स्याद्देवादीनाञ्च साधने ॥
गुप्तवादे च तोत्रन्तु प्राजने वल्लवेऽपि च ॥ ४५ ॥
तन्त्रं कुटुम्बकृत्ये स्यात् कारणे च परिच्छदे ॥

शास्त्रे प्रधाने सिद्धान्ते तन्तुवाये गदोत्तमे ॥ ४६ ॥
तत्त्वादिसाधनोपाये श्रुतिशाखान्तरेऽपि च ॥
इतिकर्त्तव्यतायाञ्च तन्त्री वीणागुणे तनोः ॥ ४७ ॥
शिरायाममृतायाञ्च छत्रमातपवारणे ॥
छत्रा मधुरिकायां स्यात् कुस्तुम्बुरुशिलीन्ध्रयोः ॥ ४८ ॥
चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः ॥
ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि ॥ ४९ ॥
अम्भसामपि चाऽवर्त्ते चुक्रस्त्वम्लेऽम्लवेतसे ॥
चुक्री चाङ्गेरिकायां स्याद्वृक्षाम्ले चुक्रमिष्यते ॥ ५० ॥
शुक्रः काव्येऽनले ज्येष्ठे शुक्रो रेतोऽक्षिरोगयोः ॥
शुक्रं शक्रो महेन्द्रे स्यात् कुटजार्ज्जुनभूरुहोः ॥ ५१ ॥
नक्रः कुम्भीरके नक्रं नासायामग्रदारुणि ॥
वक्रः स्यात् कुटिले क्रूरे पुटभेदे शनैश्चरे ॥ ५२ ॥
अग्रमालम्बने व्राते परिमाणे पलस्य च ॥
प्रान्ते पुरस्तादधिके प्रधाने प्रथमोद्र्ध्वयोः ॥ ५३ ॥
उग्रः शूद्रासुते क्षत्राच्छ्रीकण्ठे चोऽत्कटेऽन्यवत् ॥
उग्रा वचाछिक्किकयोर्व्यग्रो व्यासक्त आकुले ॥ ५४ ॥
भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे ॥
भद्रो रुद्रे वृषे रामचन्द्रे मेरुकदम्बयोः ॥ ५५ ॥
हस्तिजात्यन्तरे भद्रो वाच्यवच्छ्रेष्ठसाधुनोः ॥
भद्रा मन्दाकिनीरास्नाकृत्स्नानन्तासु कट्फले ॥ ५६ ॥
क्षुद्रः स्यादधमे क्रूरे कृपणेऽल्पे च वाच्यवत् ॥
क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च ॥ ५७ ॥
चाङ्गेरी बृहतीहिंस्रा मक्षिकामात्रकेषु च ॥
क्षौद्रं मधुनि पानीये वध्रं त्रपुवरत्रयोः ॥ ५८ ॥

गृध्रः खगान्तरे प्रोक्तो वाच्यवच्चार्थलुब्धके ॥
रोध्रः सावरके रोध्रमपराधेऽपि किल्विषे ॥ ५९ ।
नीध्रं नेमौ वलीकेन्द्वो रेवतीभे च कानने ॥
राष्ट्रमुद्दिष्टमुत्पाते तथा स्यादुपवर्त्तने ॥ ६० ॥
कृच्छ्रमाख्यातमाभीले तपःसान्तपनादिनोः ॥
चन्द्रः सुधांशुकर्पूरकाम्पिल्लस्वर्णवारिषु ॥ ६१ ॥
इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः ॥
इन्द्रा फणिज्झके सान्द्रो घनकाननयोर्मृदौ ॥ ६२ ॥
गुन्द्रस्तेजनके गुन्द्रा प्रियङ्गौ भद्रमुस्तके ॥
कैवर्त्तीमुस्तके चाऽपि रौद्रो नाट्यरसान्तरे ॥ ६३ ॥
रौद्रोऽतिभीषणे तीव्रे रौद्रा स्कन्दस्य मातरि ॥
उड्रो जने जपावृक्षे उड्रा जनपदान्तरे ॥ ६४ ॥
पितृकेदारयोर्वप्रो वप्रः प्राकाररोधसोः ॥
पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके ॥ ६५ ॥
चित्रे कृमौ पुण्डरीके पुण्ड्राः स्युर्नीवृदन्तरे ॥
वज्रं हीरकदम्भोलिबालकामलकेषु च ॥ ६६ ॥
वज्रा गुडूचिकायां स्यात् ताम्रं शुल्वेऽरुणेऽन्यवत् ॥
तीव्रमत्युष्णकटुकनितान्तेष्वन्यवन्मतम् ॥ ६७ ॥
तीव्रा च कटुरोहिण्यामासुरीगण्डदूर्वयोः ॥
अस्रः कोणे शिरसिजे चाऽस्रमश्रुणि शोणिते ॥ ६८ ॥
दस्रः खरे चाऽश्विनयोर्घस्रो दिवसहिंस्रयोः ॥
वाश्रोऽपि दिवसे वाश्रं मन्दिरे च चतुष्पथे ॥ ६९ ॥
शीघ्रं द्रुतगतौ शीघ्रं चक्राङ्गोशीरयोरपि ॥
व्याघ्रो दीपिनि विख्यातः शुक्लैरण्डकरञ्जयोः ॥
व्याघ्री निदिग्धिकायाञ्च श्रेष्ठे स्यादुत्तरस्थितः ॥ ७० ॥

अभ्रं नभः स्वर्गवलाहकेषु
शुभ्रं प्रदीप्ते धवलेऽभ्रके च ॥
बभ्रुर्विशाले नकुले कृशानौ
वज्रे मुनौ शूलिनि पिङ्गले च ॥ ७१ ॥
शिग्रुः शोभाञ्जने शाके शरुः कुलिशकोपयोः ॥
स्वरुर्वज्रेऽध्वरे बाणे यूपखण्डेऽपि च स्वरुः ॥ ७२ ॥
खरुर्दन्ते हरे दर्पे हये श्वेते तु वाच्यवत् ॥
चरुर्भाण्डे च हव्यान्ने भरुर्भर्त्तरि काञ्चने ॥ ७३ ॥
गुरुर्निषेकादिकरे पित्रादौ सुरमान्त्रिणि ॥
दुर्ज्जरालघुनोः प्रोक्तो गुरुर्महति वाच्यवत् ॥ ७४ ॥
रुरुर्मृगे दैत्यभेदे कारुः कारकशिल्पिनोः ॥
विश्वकर्मणि शिल्पे च कुरुः श्रीकण्ठजाङ्गले ॥ ७५ ॥
उन्दने नृपभेदे च पुरुः प्राज्यपरागयोः ॥
पुरुः स्वर्लोकनृपयोर्मरुर्भूधरधन्वनोः ॥ ७६ ॥
आरुस्तरुविशेषे स्यादारुः कर्कटदंष्ट्रिणोः ॥
कद्रूर्मातरि नागानां कद्रुः कनकपिङ्गले ॥ ७७ ॥
हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु ॥
सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च ॥ ७८ ॥
हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः ॥
भूरिर्ब्रह्माच्युतेशेषु भूरिप्राज्यसुवर्णयोः ॥ ७९ ॥
गिरिर्गीर्णौ गिरियके क्रीडाकन्दुकशैलयोः ॥
नेत्रामयविशेषेऽपि मत्स्ये तु गिरिरन्यवत् ॥ ८० ॥
वारिः स्मृत्यां सरस्वत्यां वारि ह्रीवेरनीरयोः ॥
वारी घटीभवन्धन्यो रङ्घ्रिः स्यात् पादबुध्नयोः ॥ ८१
शारिस्त्वक्षोपकरणे तथा शकुनिकान्तरे ॥

युद्धार्थगजपर्याणे व्यवहारेऽपि च क्वचित् ॥ ८२ ॥
कारिः क्रियायामाख्याता नापितादिकशिल्पिनि ॥
अद्रिः शैलद्रुमार्केषु ऐन्द्रिः काकजयन्तयोः ॥ ८३ ॥
ऐन्द्रिरम्भोधरे जिष्णौ तन्द्री निद्राप्रमीलयोः ॥
धात्री जनन्यामलकीवसुमत्युपमातृषु ॥ ८४ ॥
उष्ट्री गोलकिकायां स्यात् करभस्य च योषिति ॥
क्रोष्ट्री शृगालिकाक्षीरविदारीलाङ्गलीषु च ॥ ८५ ॥
तरिर्नावि दशायाश्च वस्त्रादीनाञ्च पेटके ॥
जारी स्यादोषधीभेदे जारस्तूपपतावपि ॥ ८६ ॥
इरा वारिसुराभूमिभारतीषु प्रयुज्यते ॥
स्थिरा भूमौ शालपर्ण्यां स्थिरो निश्चलमोक्षयोः ॥ ८७ ॥
धारा सैन्याग्रिमस्कन्धसन्तत्योः पत्तनान्तरे ॥
द्रवद्रव्यप्रपातेऽपि तुरङ्गगतिपञ्चके ॥ ८८ ॥
खड्गादीनाञ्च निशितमुखे धाराऽपि कीर्त्यते ॥
धारः क्वचिद्घनासारवर्षणे स्यादृणेऽपि च ॥ ८९ ॥
वीरा स्यात् क्षीरकाकोलितामलक्येलवालुषु ॥
पतिपुत्रवतीरम्भागम्भीरामदिरासु च ॥ ९० ॥
गोष्ठोदुम्बरिकाक्षीरविदारीदुग्धिकासु च ॥
वीरस्तु सुभटे श्रेष्ठे वीरं शृङ्ग्यां नतेऽपि च ॥ ९१ ॥
आर्द्रा नक्षत्रभेदे स्यादार्द्रं क्लिन्नेऽभिधेयवत् ॥
यात्रा तु यापनोपाये गतौ देवार्च्चनोत्सवे ॥ ९२ ॥
उस्रा गव्युपचित्रायामुस्रस्तु किरणे स्मृतः ॥
हिंस्रा काकादने मत्स्यो हिंस्रः स्याद्घातकेऽन्यवत् ॥ ९३ ॥

रत्रिकम् ॥

अमरस्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे ॥

दूर्वाऽमरावतीस्थूणा गुडूचीष्वऽमरा मता ॥ ९४ ॥
अपरन्त्वधुनार्थे स्यात् पश्चाद्गात्रे च दन्तिनाम् ॥
अर्वाचीने परं प्राहुर्जरायौ चापरामपि ॥ ९५ ॥
अधरो दन्तवसनेऽनूर्द्धे हीनेऽधरोऽन्यवत् ॥
अध्वरो वसुभेदे स्यात् सावधाने क्रतावपि ॥ ९६ ॥
अन्तरन्तु परीधाने भेदे रन्ध्रावकाशयोः ॥
आत्मान्तर्द्धिविनात्मीयबहिर्मध्यावधिष्वपि ॥ ९७ ॥
तादर्थ्येऽवसरे चोक्तमवरं चरमेऽन्यवत् ॥
गजान्त्यजङ्घादेशे च भवान्यामवरा मता ॥ ९८ ॥
उत्तरं प्रतिवाक्ये स्यादूर्द्धोदीच्योत्तमेऽन्यवत् ॥
उत्तरस्तु विराटस्य तनये दिशि चोऽत्तरा ॥ ९९ ॥
इतरः पामरेऽन्यस्मिन्नक्षरं ब्रह्मवर्णयोः ॥
ऋक्षरं वारिधारायामृक्षरश्चर्त्विजि स्मृतः ॥ १०० ॥
प्रवरं सन्ततौ गोत्रे श्रेष्ठे तु प्रवरोऽन्यवत् ॥
शबरो वारिचण्डालभेदयोः शङ्करेऽपि च ॥ १०१ ॥
अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके ॥
शम्बरं सलिले चित्तबौद्धव्रतविशेषयोः ॥ १०२ ॥
शम्बरो दैत्यहरिणमत्स्यशैलाजिनान्तरे ॥
ओषधौ शम्बरीमाहुः प्रखरोऽश्वतरे शुनि ॥ १०३ ॥
तुरङ्गानाञ्च सन्नाहे प्रखरोऽतिभृशस्वरे ॥
शिखरं शैलवृक्षाग्रकक्षापुलककोटिषु ॥ १०४ ॥
पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च ॥
खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे वारिवालके ॥ १०५ ॥
खिर्खीरा तद्वहुत्वे च विष्टरस्तु महीरुहे ॥
आसने कुशमुष्टौ च द्विरदस्कन्धपीठयोः ॥ १०६ ॥

कवटे चाऽथ पिठरो मुस्तमन्थानदण्डयोः ॥
पिठरः स्यादुखायाश्च जठरः कठिनेऽन्यवत् ॥ १०७ ॥
कुक्षौ वृद्धे च जठरं वण्ठरस्तालपल्लवे ॥
करीरकोशेऽप्यररं कपाटे छदनेऽपि च ॥ १०८ ॥
क्रकरः क्रकचे दीने करीरे च खगान्तरे ॥
कदरः श्वेतखदिरे क्षुद्ररोगेऽपि भाषितः ॥ १०९ ॥
बदरं कोलकार्पास्योः फले स्याद्बदरी तयोः ॥
एलापर्ण्यान्तु बदरा विष्णुक्रान्तौषधावपि ॥ ११० ॥
प्रदरो रोगभेदे स्यात् प्रदरः शर भङ्गयोः ॥
मकरो यादसि ज्ञेयो निधिराशिप्रभेदयोः ॥ १११ ॥
निकरो निवहे सारे न्यायदेयधनान्तरे ॥
शीकरं शबले वातसृताम्बुकणयोर्विदुः ॥ ११२ ॥
प्रकरश्चोपकारश्च विकीर्णकुसुमादिषु ॥
संहतौ चोपकृत्यायां यथासङ्ख्यमवस्थितौ ॥ ११३ ॥
जोङ्गके प्रकरं प्रोक्तं प्रकरी चत्वरावनौ ॥
विस्तरस्तु प्रपञ्चे स्याद्विस्तारे प्रणयेऽपि च ॥ ११४ ॥
संस्तरप्रस्तरावेतौ संस्तराध्वरयोरपि ॥
मणिपाषाणयोश्चाऽपि यथाक्रममुदीरितौ ॥ ११५ ॥
टगरष्टङ्कणक्षारे हेलाविभ्रमगोचरे ॥
वाच्यवत् केकराक्षे तु मुद्गरं मल्लिकाभिदि ॥ ११६ ॥
लोष्ट्रादिभेदनेऽपि स्यादुदरं जठरे युधि ॥
प्रसरः प्रणये वेगे सङ्गरे चाऽथ मत्सरः ॥ ११७ ॥
असह्यपरसम्पत्तौ मात्सर्य्यं कृपणे युधि ॥
मत्सरा मक्षिकायाश्च विसरः प्रसरे व्रजे ॥ ११८ ॥
कुहरः कोठरे छिद्रे नागराजविशेषयोः ॥

दहरो मूषिकायाञ्च स्वल्पभ्रातरि बालके ॥ ११९ ॥
चमरं चामरे प्राहुर्मञ्जरीमृगभेदयोः ॥
चमरी भ्रमरे भृङ्गे कामुकेऽपि मधूत्थवत् ॥ १२० ॥
रुधिरोऽङ्गारके प्रोक्तो रुधिरं कुङ्कुमासृजोः ॥
चन्दिरोऽनेकपे चन्द्रे मुदिरः कामुकेऽम्बुदे ॥ १२१ ॥
मिहिरो भास्करे वृद्धे मदिरः काममूर्खयोः ॥
विवरं दूषणे गर्त्ते कथितं छिद्ररन्ध्रवत् ॥ १२२ ॥
खपुरः क्रमुके भद्रे मुस्तकेऽलसकेऽपि च ॥
गोपुरन्तु पुरद्वारि द्वारमात्रे च मुस्तके ॥ १२३ ॥
चिकुरश्चञ्चले केशे गृहबभ्रुभुजङ्गयोः ॥
पक्षिद्रुभेदयोः शैले चङ्कुरो रथवृक्षयोः ॥ १२४ ॥
अङ्कुरो रुधिरे रोम्णि पानीयेऽभिनवोद्भिदि ॥
कुक्कुरो वक्रपुच्छे स्याद्ग्रन्थिपर्णेऽपि कुक्कुरे ॥ १२५ ॥
मुकुरो मल्लिकापुष्पे दर्पणे च कलिद्रुमे ॥
कुलालदण्डे वकुले मकुरोऽप्येषु विश्रुतः ॥ १२६ ॥
अजिरं प्राङ्गणे वाते विषये दर्दुरे तनौ ॥
अशिरो राक्षसे वह्नावशिरस्तपनेऽपि च ॥ १२७ ॥
शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् ॥
वशिरं किणिहीसिन्धुलवणे कुम्भकेषु च ॥ १२८ ॥
सुषिरं विवरे वाद्ये सरन्ध्रे सुषिरोऽन्यवत् ॥
सुषिरोऽग्नौ च तिमिरं ध्वान्ते नेत्रामयेऽपि च ॥ १२९ ॥
छिदिरः पावके रज्जौ करवाले परश्वधे ॥
दन्तुरं वाच्यवद्विद्याद्विषमोन्नतदन्तयोः ॥ १३० ॥
विदुरो नागरे वीरे कौरवाणाञ्च मन्त्रिणि ॥
विधुरं स्यात् प्रविश्लेषे विधुरो विकलेऽन्यवत् ॥ १३१ ॥

विधुराऽपि रसालायां मधुरस्तु रसे विषे ॥
मधुरं रसवत् स्वादुप्रियेषु मधुरोऽन्यवत् ॥ १३२ ॥
मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः ॥
मधुकर्कटिकाभेदामधूलीयाष्टिकासु च ॥ १३३ ॥
बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरः ॥
बन्धुके च विदुङ्गे च बन्धूरापण्ययोषिति ॥ १३४ ॥
बर्बरः पामरे केशविन्यासे नीवृदन्तरे ॥
बर्बरा फाञ्जिकायान्तु बर्बराशाकपुष्पयोः ॥ १३५ ॥
कर्बुरं सलिले हेम्नि कर्बुरं पापरक्षसोः ॥
कर्बुरा पुष्पवृन्तायां किर्मीरे कर्बुराऽन्यवत् ॥ १३६ ॥
कर्परः स्यात् कपाले च शस्त्रभेदकटाहयोः ॥
कूर्परो जानुनि प्रोक्तः कफोणावपि कूर्परः ॥ १३७ ॥
खर्परः तस्करे धूर्त्ते भिक्षापात्रकपालयोः ॥
गर्गरो मीनभेदे स्यान्मन्थन्यामपि गर्गरी ॥ १३८ ॥
घर्घरस्तु चलद्वारिध्वानोलूकनदान्तरे ॥
निर्झरस्तु सहस्रांशु तुरङ्गे तुषपावके ॥ १३९ ॥
मुर्म्मुरस्तुषवह्नौ स्यान्मन्मथे रविवाजिनि ॥
जर्ज्जरो वाच्यवज्जीर्णे जर्ज्जरं वासवध्वजे ॥ १४० ॥
निर्ज्जरस्तु जरात्यक्ते वाच्यवन्निर्ज्जरः सुरे ॥
निर्ज्जरा तु गुडूच्यां स्यात्तालपत्र्यामपि क्वचित् ॥ १४१ ॥
जर्झरः स्यात् कलियुगे वाद्ये भाण्डे नदान्तरे ॥
दर्दुरस्तु गिरावीषद्भग्नवस्तुनि वाच्यवत् ॥ १४२ ॥
दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः ॥
दर्दुरा चण्डिकायाश्च ग्रामजाले तु दर्दुरम् ॥ १४३ ॥
वार्द्दरं दक्षिणावर्त्तशङ्खे कृमिजनीरयोः ॥

काकचिन्त्याश्वबीजेऽपि वाचि वार्द्दरमिष्यते ॥ १४४ ॥
दुर्धरं वाच्यवद् दुःखधार्य्ये स्याद्वृषभौषधे ॥
दुर्धरो निर्भरे सारे निर्भये निरपत्रपे ॥ १४५ ॥
कुञ्जरोऽनेकपे केशे धातक्यामपि कुञ्जरा ॥
पिञ्जरं कनके वाजिभेदे पीते च पिञ्जरः ॥ १४६ ॥
मन्दरो मन्थरे शैले स्वर्गमन्दारयोरपि ॥
मन्दरो बहले मन्दे कन्दरो विवरे कुशे ॥ १४७ ॥
मन्दिरं नगरेऽगारे मन्दिरो मकरालये ॥
बर्करस्तरुणे मेषे कर्करो दर्पणे दृढे ॥ १४८ ॥
कन्धरो वारिवाहे स्याद्ग्रीवायामपि कन्धरा ॥
वल्लुरं शाद्वले प्रोक्तं निर्जलस्थानकुञ्जयोः ॥ १४९ ॥
वल्लक्षेत्रे च मञ्जर्य्यां वल्लरी तु प्रकीर्त्तिता ॥
मन्थरः सूचके कोठे मन्थाने चाऽथ मन्थरम् ॥ १५० ॥
कुसुम्भ्यां मन्थरो मन्दे पृथौ वक्रे च वाच्यवत् ॥
कच्चरं कुत्सिते तक्रे चत्वरं स्थण्डिलेऽङ्गने ॥ १५१ ॥
छित्वरं छेदनद्रव्ये छित्वरो धूर्त्तवैरिणोः ॥
इत्वरो दुर्विधे नीचे पथिकक्रूरकर्म्मणोः ॥ १५२ ॥
पुष्करं पङ्कजे व्योम्नि पयःकारिकराग्रयोः ॥
औषधद्वीपविहगतीर्थराजोरगान्तरे ॥ १५३ ॥
पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च ॥
डिङ्गरो डङ्गरे क्षेपे सङ्गरोऽङ्गीकृतौ युधि ॥ १५४ ॥
विषापदोः क्रियाकारे सङ्गरन्तु शमीफले ॥
गह्वरस्तु गृहादम्भनिकुञ्जगहनेष्वपि ॥ १५५ ॥
कर्वरः कथितो व्याघ्रे शिवायामपि कर्वरी ॥
चतुरश्चातुरकवचचक्रगण्डौ नियन्तरि ॥ १५६ ॥

एतौ स्यातामुभौ नेत्रगोचरे चाटुकारिणि ॥
ईश्वरो विभवैराढ्ये शम्भौ स्वामिनि मन्मथे ॥ १५७ ॥
पार्वत्यामीश्वरामाहुर्द्वापरः संशये युगे ॥
आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते ॥ १५८ ॥
भास्करस्तपने वह्नौ प्रभाकरसमः स्मृतः ॥
पार्परो भक्तसिक्थे स्यात् कीनाशे राजयक्ष्मणि ॥ १५९ ॥
जराटेऽपि कदम्बस्य केशरेऽपि च भस्मनि ॥
शार्वरन्त्वन्धतमसे शार्वरो घातुकेऽन्यवत् ॥ १६० ॥
प्रान्तरं विपिने दूरशून्यवर्त्मनि कोटरे ॥
शार्करो दुग्धफेणेऽपि शर्करान्वितदेशवत् ॥ १६१ ॥
शार्करो वृषभे छन्दोविशेषे शार्करं मतम् ॥
नागरं मुस्तके शुण्ठ्यां विदग्धे नागरोऽन्यवत् ॥ १६२ ॥
शंसान्ति नगरोद्भूते रतवन्धे च नागरम् ॥
वागरो वारके शाणे निर्झरे वाडवे वृके ॥ १६३ ॥
विशारदे मुमुक्षौ च गवामङ्के च वागरम् ॥
चामरं ग्रावमधुनोः पामरः स्वस्थनीचयोः ॥
वासरो दिवसे रागप्रभेदेऽपि च वासरः ॥ १६४ ॥
कान्तारमुपसर्गादौ वने दुर्गमवर्त्मनि ॥
इक्षुप्रभेदे कान्तारः पादारः पादधूलिषु ॥ १६५ ॥
पादलिङ्गे च मन्दारः पारिभद्रार्कपर्णयोः ॥
सुरद्रुमेऽपि गान्धारः सिन्दूरे रागदेशयोः ॥ १६६ ॥
आधारश्चाऽधिकरणेऽप्यालवालेऽम्बुधारणे ॥
आसारः स्यात् प्रसरणे वेगवर्षे सुहृद्बले ॥ १६७ ॥
केदारः पर्वते शम्भौ क्षेत्रभेदालवालयोः ॥
उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत् ॥ १६८ ॥

मदारो द्विरदे धूर्त्ते विदारो दारणे रणे ॥
विदारी शालपर्ण्याञ्च रोगभेदे भगन्दरे ॥ १६९ ॥
विकारो विकृतौ रोगेऽप्याकारः संस्थिताङ्गयोः ॥
निकारः स्यात् परिभवे धान्यस्योत्किरणेऽपि च ॥१७०॥
प्रकारः सदृशे भेदे टङ्कारः पिञ्जिनीध्वनौ ॥
विस्मये च प्रसिद्धौ च दण्डारः शरयन्त्रके ॥ १७१ ॥
कुलालचक्रे वहने दण्डारो मत्तवारणे ॥
पिण्डारः क्षपणक्षेपे महिषीरक्षके द्रुमे ॥ १७२ ॥
तुषारो हिमभेदे च मकरेऽपि हिमेऽपि च ॥
शुनारस्तु शुनीस्तन्ये सर्पाण्डकलविङ्कयोः ॥ १७३ ॥
कुमारो बालके स्कन्दे युवराजेऽश्वचारके ॥
शुके च वरुणद्रौ च कुमारं जात्यकाञ्चने ॥ १७४ ॥
कुमारी रामतरणीनवमाल्योर्नदीभिदि ॥
कन्याऽपराजितागौरीजम्बूद्वीपेषु च स्मृता ॥ १७५ ॥
आहारो भोजने हारे भवेदाहरणेऽपि च ॥
विहारो भ्रमणे स्कन्धे लीलायां सुगतालये ॥ १७६ ॥
कुटारं मैथुने विद्यात् कुटारं केवलेऽपि च ॥
कोट्टारो नागरे कूपे पुष्करिण्याञ्च पाटके ॥ १७७ ॥
कडारः पिङ्गले दासे सम्भारः सम्भृतौ गणे ॥
केनारः कुम्भिनरके शिरःकपालसन्धिषु ॥ १७८ ॥
शङ्कुरोऽग्निचटत्कारे सम्मार्ज्जन्यवपुञ्जिते ॥
नरदूषितकन्यायां शङ्कुरा काऽपि दृश्यते ॥ १७९ ॥
पङ्कारः शैवले सेतौ सोपाने जलकुब्जके ॥
संस्कारः प्रतियत्ने स्यात् सङ्कल्पेऽनुभवेऽपिच ॥ १८० ॥
शालारं स्याद्धस्तिनखे सोपाने पक्षिपञ्जरे ॥

कञ्जारो जठरे सूर्ये विरिञ्चौ वारणे मुनौ ॥ १८१ ॥
मार्ज्जार ओतौ धट्वांशे भृङ्गारः कनकालुके ॥
भृङ्गारी झिल्लिकायां स्यादङ्गारोऽलातभौमयोः ॥ १८२ ॥
शृङ्गारः सुरते नाट्यरसेऽपि गजमण्डने ॥
शृङ्गारं चूर्णसिन्दूरलवङ्गकुसुमेषु च ॥ १८३ ॥
विस्तारो विस्तृतौ स्तम्ब उद्धारश्चोद्धृतावृणे ॥
माठरो द्विजभेदे स्याद्व्यासेऽर्कपारिपार्श्वके ॥ १८४ ॥
शावरः पठ्यते रोध्रे तथा पापापराधयोः ॥
शावरी शूकशिम्ब्याञ्च शारीरं देहजे वृषे ॥ १८५ ॥
करीरः कलशे वृक्षभेदे वंशाङ्कुरेऽपि च ॥
करीरी चीरिकायाञ्च दन्तमूले च दन्तिनाम् ॥ १८६ ॥
शणीरं शोणमध्यस्थपुलिने दर्दरीतटे ॥
जम्बीरं प्रस्थपुष्पाख्यशाके दन्तशठेऽपि ॥ १८७ ॥
औशीरमाहुश्चमरदण्डे च शयनासने ॥
सौवीरं बदरे स्तोत्राञ्जने देशे च काञ्जिके ॥ १८८ ॥
किर्मीरः कर्वुरे दैत्यराक्षसान्तरयोरपि ॥
काश्मीरं कुङ्कुमे प्रोक्तं टङ्कपुष्करमूलयोः ॥ १९९ ॥
पाटीरो वार्तिके रङ्गे मूलके तितउन्यपि ॥
धाराधरेऽपि केदारे वेणुसारेऽपि चेष्यते ॥ १९० ॥
अण्डीरः पुरुषे शक्ते हिण्डीरः पुरुषे स्मृतः ॥
फेणे वातिङ्गणे चाऽपि धूसरः पाण्डुरे खरे ॥ १९१ ॥
कूबरः कुब्जके चारौ कूबरश्च युगन्धरे ॥
रूबरोऽश्मश्रुपुरुषे प्रौढाशृङ्गवृषेऽपि च ॥ १९२ ॥
स्यान्नीवरो वाणिजके वास्तव्येऽपि च नीवरः ॥
पीवरः कच्छपे स्थूले धीवरो लुब्धके बुधे ॥ १९३ ॥

केशरं हिङ्गुनि प्रोक्तं केशरो नागकेशरे ॥
सिंहच्छटायां पुन्नागकिञ्जल्कवकुलेष्वपि ॥ १९४ ॥
किशोरस्तरुणावस्थे हयशावकसूर्ययोः ॥
तैलायन्यां कुबेरस्तु नन्दीवृक्षे धनाधिपे ॥ १९५ ॥
कणेरुः स्याद्वशावेश्याकार्णिकारे गणेरुवत् ॥
कैटीरुः शक्रगोपे च शक्रे च नकुलेऽपि च ॥ १९६ ॥
अगुरुः स्याच्छिंशपायां जोङ्गकेऽपि लघुन्यपि ॥
किंशारुः सस्यशूकेऽपि विशिखे कङ्कपक्षिणि ॥ १९७ ॥
भार्यारुः शैलभेदे स्यान्मृगभेदे च तत्र च ॥
क्रीडायां परभार्यायां पुत्रो येनोपपादितः ॥ १९८ ॥
कुठारुः पादपे कीशे कटप्रूः स्यान्महानटे ॥
विद्याधरे रक्षसि च कटप्रूरक्षदेवने ॥ १९९ ॥
दासेरो दासिकापुत्रे दासेरः स्यात् क्रमेलके ॥
मयूरो बर्हिचूडायामपामार्गे शिखण्डिनि ॥ २०० ॥
खर्ज्जूरं रजते विद्याद्वृश्चिकद्रुमभेदयोः ॥
खर्ज्जूरश्चाऽथ कर्च्चूरं शटीकाञ्चनयोर्मतम् ॥ २०१ ॥
सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके ॥
सिन्दूरी रोचनीरक्तचेलिकाधातकीषु च ॥ २०२ ॥
वल्लूरं स्याद्वनक्षेत्रे वाहनोषरयोरपि ॥
वल्लूरमाहुः संशुष्कमांसशूकरमांसयोः ॥ २०३ ॥
एकाग्रमेकताने स्यादेकाग्रश्चाप्यऽनाकुले ॥
नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येऽपि कथ्यते ॥ २०४ ॥
महेन्द्रः पर्वते शक्रे जलेन्द्रो वरुणेऽम्बुधौ ॥
जम्भलेऽपि जलेन्द्रः स्यात् सामुद्रं देहलक्षणे ॥ २०५ ॥
सामुद्रश्च समुद्रीयलवणादिषु भेद्यवत् ॥

खण्डाभ्रमभ्रलेशे स्यात् स्त्रीणां दन्तक्षतान्तरे ॥ २०६ ॥
कटित्रं रसनायां स्याच्चर्माङ्गे कटिवाससि ॥
शिलीन्ध्रं कदलीपुष्पे करकात्रिपुटाख्ययोः ॥ २०७ ॥
शिलीन्ध्रः कथितो धीरैस्तङ्गमीनप्रभेदयोः ॥
मृदा गण्डूपदी प्रोक्ता शिलीन्ध्री विहगीभिदि ॥ २०८ ॥
तमिस्रं तिमिरे कोपे तमिस्रा च तमस्ततौ ॥
कृष्णपक्षनिशायाञ्च त्वक्पत्रन्तु वराङ्गके ॥ २०९ ॥
त्वक्पत्रीति च कारव्यां कलत्रं श्रोणिभार्ययोः ॥
दुर्गस्थाने नृपादीनां पवित्रं वर्षणे कुशे ॥ २१० ॥
पवित्रं ताम्रपयसोमेध्ये चाऽपि तदन्यवत् ॥
सावित्रः शङ्करे प्रोक्तः सावित्री देवतान्तरे ॥ २११ ॥
दैत्यारिस्त्रिदशे विष्णौ तित्तिरिर्विहगे मुनौ ॥
शाङ्करिर्विघ्नपे स्कन्दे जैमुरिः पावके पवौ ॥ २१२ ॥
मन्दुरा वाजिशालायां समीपार्थे च वस्तुनि ॥
उर्वरा सर्वसस्याढ्यभूमौ स्याद् भूमिमात्रके ॥ २१३ ॥
असुरा रजनीवास्योरसुरो दानवे रवौ ॥
वासुरा वासितायां स्याद्वासितेय्यां मता भुवि ॥ २१४ ॥
मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति ॥
मसूरमसुरौ च द्वावेतावप्येतयोर्मतौ ॥ २१५ ॥
शर्करा खण्डविकृतावुपलाकर्पराशयोः ॥
शर्करान्वितदेशे च रुग्भेदे सकलेऽपि च ॥ २१६ ॥
कच्छुरा शूकाशिम्ब्याञ्च शटीदुःस्पर्शयोरपि ॥
कच्छुरं वाच्यवत् प्राहुः पामरे पुंश्चलेऽपि च २१७ ॥
मर्मरा तु दरीभाण्डमुररानिकुलासु च ॥
गायत्री कथिता छन्दःप्रभेदे खदिरेऽपि च ॥ २१८ ॥

सैरिन्ध्री परवेश्मस्थशिल्पकृत्स्ववशस्त्रियाम् ॥
वर्णसङ्करसम्भूतस्त्रीमहल्लिकयोरपि ॥ २१९ ॥
खदिरी शाकभेदे स्यात् खादिरो दन्तधावने ॥
सुन्दरी स्त्रीतरुभिदोः शर्वरी रात्रियोषितोः ॥ २२० ॥
हरिद्रायाञ्च कवरी केशशाकविशेषयोः ॥
कवरं लवणेऽम्ले च तुम्बरी शरमर्दयोः ॥ २२१ ॥
मञ्जरी वल्लरीस्थूलमुक्तातिलकशाखिषु ॥
मर्म्मरी पीतदारौ स्याद्वस्त्रभेदे च मर्म्मरः ॥ २२२ ॥
टट्टरी स्यान्मृषावादे लम्पापटहवाद्ययोः ॥
शक्वरा मेखलानद्योश्छन्दोभेदेऽपि शक्करी ॥ २२३ ॥
सल्लरी सिल्लरी च द्वे हुडुके चारचक्रके ॥
कावेरी स्यात् सरिद्भेदे पण्यनारीहरिद्रयोः ॥ २२४ ॥

रचतुष्कम् ॥

भवेत् परिकरो व्राते पर्य्यङ्कपरिवारयोः ॥
प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि ॥ २२५ ॥
व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोः ॥
विभाकरोऽग्नौ तपनेऽवस्करो गूथगुह्ययोः ॥ २२६ ॥
कर्म्मकरस्तु कीनाशे भृत्ये वेतनजीविनि ॥
कर्म्मकरी तु मूर्वायां बिम्बिकायामपि क्वचित् ॥ २२७ ॥
अरुष्करो व्रणकृति भल्लाते चाप्यरुष्करम् ॥
भवेत् सहचरो झिण्ट्यां वयस्यं प्रतिबिम्बके ॥ २२८ ॥
निशाचरः पेचकाहियातुधानेषु फेरवे ॥
निशाचरी पंसुलायां भवेत् पक्षचरो विधौ ॥ २२९ ॥
यूथभ्रष्टपृथक्चारी वारणेऽपि प्रकीर्त्तितः ॥
चराचरं स्याज्जगति वाच्यवज्जङ्गमेङ्गयोः ॥ २३० ॥

विदुर्दशपुरं देशे मुस्तायां पत्तनेऽपि च ॥
आभिमरो वधे युद्धे तथा स्वबलसाध्वसे ॥ २३१ ॥
आहुः प्रतिसरं हस्तसूत्रे माल्येऽपि मण्डने ॥
व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षकङ्कणे ॥ २३२ ॥
मन्त्रभेदेऽप्यवसरो वर्षप्रस्तावयोरपि ॥
स्मृतः पारिसरो मृत्यौ दैवोपान्त्यप्रदेशयोः ॥ २३३ ॥
दिगम्बरः स्यात् क्षपणे नग्ने तपसि शङ्करे ॥
पीताम्बरः पद्मनाभे भवेत् पीताम्बरो नटे ॥ २३४ ॥
कादम्बरन्तु दध्यग्रे मद्यभेदे च शीधुनि ॥
कादम्बरी परभृताभारतीशारिकासु च ॥ २३५ ॥
उदुम्बरस्तु देहल्यां वृक्षजातौ च पण्डके ॥
उदुम्बरं स्मृतं ताम्रे कुष्टभेदेऽप्युदुम्बरः ॥ २३६ ॥
औदुम्बरः श्राद्धदेवे रोगभेदे च कथ्यते ॥
नीलाम्बरः प्रलम्बघ्ने कौणपे क्रूरलोचने ॥ २३७ ॥
आडम्बरः समारम्भे गजगर्ज्जिततूर्ययोः ॥
निषद्वरस्तु जम्बाले निशायाञ्च निषद्वरी ॥ २३८ ॥
उपह्वरं समीपे स्यादेकान्ते चाऽप्युपह्वरम् ॥
इन्दीवरं कुवलये वर्य्यामिन्दीवरी मता ॥ २३९ ॥
कारञ्जरो योगिचक्रे मेलके भैरवे गिरौ ॥
कारञ्जरोऽच्युते शक्रे भवेद्विश्वम्भरा भुवि ॥ २४० ॥
दुरोदरो द्यूतकरे पणे द्यूते दुरोदरम् ॥
लम्बोदरः स्यादुद्ध्माते गणानामधिपेऽपि च ॥ २४१ ॥
अनुत्तरः स्मृतः श्रेष्ठे प्रतिजल्पविवर्ज्जिते ॥
तुलाधरस्तुलाराशौ भवेद्वाणिजकेऽपि च ॥ २४२ ॥
भवेत्तोयधरो मेघे सुनिषण्णौषधेऽपि च ॥

धुरन्धरो धवतरौ धूर्वहेऽपि धुरन्धरः ॥ २४३ ॥
चक्रधरो हरौ सर्पे वाच्यवद्ग्रामजालिनि ॥
अश्वतरो वेसरे च नागराजान्तरेऽपि च ॥ २४४ ॥
विदुर्वीरतरं श्रेष्ठे शरवीरणयोरपि ॥
नभश्चरो घने वाते विद्याधरविहङ्गयोः ॥ २४५ ॥
उद्दन्तुरः स्यादुत्तुङ्गे करालोत्कटदन्तयोः ॥
द्वैमातुरो जरासन्धवारणाननयोर्मतः ॥ २४६ ॥
परम्परः प्रपौत्रादौ मृगभेदे परम्परः ॥
परम्परा परीपाट्यां सन्तानेऽपि वधे क्वचित् ॥ २४७ ॥
धराधरः क्ष्माभृति चक्रपाणौ
धाराधरस्तोयधरे कृपाणे ॥
पयोधरः स्यात् कुचकोषकार-
कसेरुकाम्भोधरनारिकेले ॥ २४८ ॥
कलिकारः करञ्जे स्याद् धूम्याटे पीतमस्तके ॥
अलङ्कारस्तूपमादौ हारकेयूरकादिषु ॥ २४९ ॥
कर्णिकारश्च सम्पाके कर्णिकारो द्रुमोत्पले ॥
रथकारस्तु माहिष्ये करणीजे च तक्षणि ॥ २५० ॥
चर्मकारः स्मृतः पादुकृति चर्म्मकषौषधे ॥
चर्म्मकारी च कथिता प्रतिकरः समे भटे ॥ २५१ ॥
घनसारस्तु कर्पूरे दक्षिणावर्त्तपारदे ॥
कृष्णसारः स्नुहीवृक्षे शिंशपामृगभेदयोः ॥ २५२ ॥
गिरिसारो भवेल्लोहे लिङ्गे मलयपर्वते ॥
पीतसारो मलयजे गोमेदकमणावपि ॥ २५३ ॥
शालसारो द्रुमे हिङ्गौ सूत्रधारः शचीपतौ ॥
नाट्यानन्तरसञ्चारिपात्रशिल्पिप्रभेदयोः ॥ २५४ ॥

दण्डधारो यमे भूपे सम्प्रहारो रणे गतौ ॥
प्रतीहारप्रतीहार्यौ द्वाःस्थे द्वारेऽप्यनन्तरे ॥ २५५ ॥
अभिहारोऽभियोगे च चौर्ये सन्नहनेऽपि च ॥
व्यवहारो द्रुभेदे स्याद्व्यवहारः पणे स्थितौ ॥ २५६ ॥
अवहारः स्मृतश्चौरे द्यूतयुद्धादिविश्रमे ॥
निमन्त्रणोपनेतव्यद्रव्ये ग्राहाख्ययादसि ॥ २५७ ॥
परिवारः परिजने खड्गकोपे परिच्छदे ॥
पारावारः समुद्रे च पारावारं तटद्वये ॥ २५८ ॥
अवतारोऽवतरणपुष्करिण्यादितीर्थयोः ॥
अकूपारः समुद्रेऽपि कूर्मराजेऽपि कीर्त्तितः ॥ २५९ ॥
शिशुमारोऽम्बुसम्भूतजन्तौ तारात्मकाच्युते ॥
सुकुमारश्च पुण्ड्रेक्षौ कोमले त्वऽभिधेयवत् ॥ २६० ॥
धुन्धुमारः शक्रगोपे गृहधूमे पदालिके ॥
कर्णपूरोऽवतंसे स्यान्नीलोत्पलशिरीषयोः ॥ २६१ ॥
करवीरः कृपाणे स्याद्दैत्यभेदाश्वमारयोः ॥
श्रेष्ठगव्यां पुत्रवत्यामदितौ करवीर्यऽपि ॥ २६२ ॥
महावीरः पवौ तार्क्ष्ये शूरे सिंहेऽपि कोकिले ॥
मखानले च कर्के च महावीरो जराटके ॥ २६३ ॥
आत्मवीरः प्राणवति श्यालपुत्र विदूषके ॥
चार्वटीरस्त्रपावाम्रास्थ्न्यङ्कुरे गणिकासुते ॥ २६४ ॥
चित्रटीरो विधौ भालमङ्कितं येन तत्र च ॥
घण्टाकर्णोपहाराय हतच्छागास्रविन्दुभिः ॥ २६५ ॥
पात्रटीरो बुधैरुक्तो भुक्तव्यापारमन्त्रिणि ॥
लोहकांस्ये जरत्पात्रे प्रमाणे पावकेऽपि च ॥ २६६ ॥
धाराङ्कुरः सुनासीरे शीकरेऽपि घनोपले ॥

समुद्रारुः स्मृतो ग्राहे सेतुबन्धे तिमिङ्गिले ॥ २६७ ॥
विश्वकद्रुः खले ध्वाने स्यादाखेटिककुक्कुरे ॥
असिपत्रो भवेत् कोषकारे च नरकान्तरे ॥ २६८ ॥
शतपत्रो राजकीरे दार्वाघाटमयूरयोः ॥
राजीवे शतपत्रन्तु वातपुत्रो हनूमति ॥ २६९ ॥
महाधूर्त्ते च भीमे च लक्ष्मीपुत्रः स्मरे हये ॥
पूर्णपात्रं वस्तुपूर्णपात्रे वर्द्धापकेऽपि च ॥ २७० ॥
महामात्रः समृद्धेऽग्रमात्येहस्तिपकाधिपे ॥
बिन्दुतन्त्रं विदुः शारिफलके चतुरङ्गके ॥ २७१ ॥
रागसूत्रं तुलासूत्रे पट्टसूत्रेऽपि दृश्यते ॥
तालपत्रन्तु ताटङ्के रण्डायां तालपत्र्यपि ॥ २७२ ॥
अग्निहोत्रोऽग्निहविषोर्वीतिहोत्रोऽनलार्कयोः ॥
वीरभद्रोऽश्वमेधाश्वे वीरश्रेष्ठे च वीरणे ॥ २७३ ॥
पारिभद्रस्तु मन्दारनिम्बपादपयोर्मतः ॥
बलभद्रो रौहिणेये त्रायमाणौषधावपि ॥ २७४ ॥
बलभद्रा कुमार्यां स्यादर्द्धचन्द्रस्तु चन्द्रके ॥
गलहस्ते बाणभेदेऽप्यर्द्धचन्द्रा त्रिवृताद्भिदि ॥ २७५ ॥
धार्त्तराष्ट्रोऽसितास्याङ्घ्रिहंसकौरवभोगिषु ॥
धृतराष्ट्रः सुराज्ञि स्यात् पक्षिक्षत्रियभेदयोः ॥ २७६ ॥
धृतराष्ट्री हंसपत्न्यां स्थिरदंष्ट्रो भुजङ्गमे ॥
वराहाकृतिविष्णौ च वक्रनक्रः शुके खले ॥ २७७ ॥
कटम्भरा प्रसारण्यां रोहिण्यां गजयोषिति ॥
कलम्बिकायां गोलायां वर्षाभूमूर्वयोरपि ॥ २७८ ॥
मणिच्छिद्रा तु मेदायामृषभाख्यौषधेऽपि च ॥
तुङ्गभद्रा नदीभेदे तुङ्गभद्रो मदोत्कटे ॥ २७९ ॥

दण्डयात्रा दिग्विजये सन्दानवरयात्रयोः ॥
देहयात्रा भोजने स्यात् कृतान्तागमनेऽपि च ॥ २८० ॥
विभावरी हरिद्रायां रजन्याश्च विभावरी ॥
विवादे वस्त्रकुट्याश्च कुट्टन्यां चक्रयोषिति ॥ २८१ ॥
कुम्भकारी कुलाल्यां स्यात् कुम्भकारः कुलालके ॥
तुण्डिकेरी तु कार्पास्यां बिम्बिकायामपीष्यते ॥ २८२॥

रपञ्चकम् ॥

पांशुसञ्चार इत्येष दूर्वाञ्चिततटीभुवि ॥
वर्द्धापके प्रशंसायां पुरोटौ धूलिगुच्छके ॥ २८३ ॥
स्यात् पादचत्वरश्छागे सैकते पिप्पलेऽपि च ॥
विप्रतीसारमिच्छन्ति कौकृत्येऽनुशये रुषि ॥ २८४ ॥
समभिहारो भृशत्वे पौनःपुन्येऽपि कथ्यते ॥
करके परदोषैकभाजि पूरुपकेऽपि च ॥ २८५ ॥
पीतकावेरमिच्छन्ति पित्तले कुङ्कुमेऽपि च ॥
तालीशपत्रं तालीशे तामलक्यामपि स्मृतम् ॥ २८६ ॥
भवेदुत्पलपत्रन्तु तद्दले स्त्रीनखक्षते ॥
तमालपत्रं तापिञ्छे तिलके पत्रकेऽपि च ॥ २८७ ॥
सर्वतोभद्र इत्युक्तः काव्यचित्रे गृहान्तरे ॥
निम्बेऽपि सर्वतोभद्रा गम्भारीनटयोषितोः ॥ २८८ ॥
वस्वौकसारा श्रीदस्य शक्रस्य नलिनीपुरोः ॥
भवेत् कपिलधाराख्या स्वर्नदीतीर्थभेदयोः ॥ २८९ ॥

इति रान्तवर्गः ॥

—:०:—

लद्विकम् ॥

बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः ॥

बलो हलायुधे दैत्यभेदे बलिनि वायसे ॥ १ ॥
वाव्यालके बला तूक्ता पलश्चोन्मानमांसयोः ॥
फलं हेतुसमुत्थे स्यात् फलके व्युष्टिलाभयोः ॥ २ ॥
जातीफलेऽपि कक्कोले सस्यवाणाग्रयोरपि ॥
फालिन्यान्तु फलं प्राहुस्त्रिफलायां फलं क्वचित् ॥ ३ ॥
जलं गोकवले नीरे ह्रीवेरे च जडेऽन्यवत् ॥
खलं भूस्थानकल्केषु क्रूरे नीचेऽधमे खलः ॥ ४ ॥
गलः सर्ज्जरसे कण्ठे चलः कम्पे चलाश्रये ॥
दलं शस्त्री छदोत्सेधतद्द्रव्ये खण्डपर्णयोः ॥ ५ ॥
नलः पोटगले राज्ञि पितृदेवे कपीश्वरे ॥
नली मनःशिलायान्तु मलिने तु नलं मतम् ॥ ६ ॥
तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोः ॥
ज्याघातवारणेऽपि स्यात्तलस्तालतरावपि ॥ ७ ॥
मलं किट्टे पुरीषे च पापे च कृपणे मलः ॥
शलन्तु शल्लकीलोम्नि शलो भृङ्गे गणे विधौ ॥ ८ ॥
खिलं भवेदप्रहते सारसंक्षिप्तवेधसोः ॥
बिलं छिद्रे गुहायाञ्च बिल उच्चैःश्रवोहये ॥ ९ ॥
बलन्तु स्खलिते व्याजे पुलन्तु पुलिनेऽन्यवत् ॥
पुलः स्यात् पुलके चाऽपि कुलं जनपदे गृहे ॥ १० ॥
सजातीयगणे गोत्रे देहेऽपि कथितं कुलम् ॥
कालो मृत्यौ महाकाले समये यमकृष्णयोः ॥ ११ ॥
कृष्णात्रिवृत्तौ काला तु नीलीमञ्जिष्ठयोरपि ॥
काली गौर्य्यां क्षीरकीटे कालिकामातृभेदयोः ॥ १२ ॥
नवाम्बुवाहवृन्देऽपि परिवादेऽपि च क्वचित् ॥
भालं ललाटमहसोर्गालः स्कन्दमहीरुहोः ॥ १३ ॥

शालो हालनृपे मत्स्यप्रभेदे सर्ज्जपादपे ॥
शाला गृहे तरुस्कन्धशाखागारैकदेशयोः ॥ १४ ॥
मालं क्षेत्रे गृहे मालो माला पुष्पादिदामनि ॥
सालः पादपमात्रं स्यात् प्राकारे शङ्कुकद्रुमे ॥ १५ ॥
तालः करतलेऽङ्गुष्ठमध्यमाभ्याञ्च सम्मिते ॥
गीतकालक्रियामाने तालः खड्गादिमुष्टिषु ॥ १६ ॥
द्रुमभेदे करास्फाले तालन्तु हरितालके ॥
वाद्यभाण्डे च कांस्यस्य तालश्छदिषि कम्पने ॥ १७ ॥
जालं गवाक्ष आनाये क्षारके दन्तवृन्दयोः ॥
जालो नीपद्रुमे जाली कोषातक्यामुदाहृता ॥ १८ ॥
व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि ॥
नालं दण्डे सरोजस्य नाली शाककलम्बके ॥ १९ ॥
स्थालं भाजनभेदेऽपि स्थाली स्यात् पाटलोखयोः ॥
फालं शिरोपकरणे कार्पासादिकवाससि ॥ २० ॥
बालः कचे शिशौ मूर्खे ह्रीवेरे श्वेभपुच्छयोः ॥
अलङ्कारान्तरे मेध्ये वाली वाला त्रुटिस्त्रियोः ॥ २१ ॥
चेलो नीचेऽन्यवच्चेलमंशुके गर्हितेऽन्यवत् ॥
भेलः प्लवे भीरुके च निर्बुद्धिमुनिभेदयोः ॥ २२ ॥
कोलोऽङ्कपालावुत्सङ्गे भेलके पोत्रिचित्रयोः ॥
कोला कणायां चव्ये च कोलन्तु बदरीफले ॥ २३ ॥
शैलो भूभृति शैलन्तु शैलेये तार्क्ष्यशैलके ॥
शीलं स्वभावे सद्वृत्ते नीलः कृष्णे नगान्तरे ॥ २४ ॥
नीलः कपीश्वरे नीली वृक्षलाञ्छनभेदयोः ॥
कूलं स्तूपे तडागे च सैन्यपृष्ठप्रतीरयोः ॥ २५ ॥
कूलः पिचौ भवेत् कूलं ब्रह्मदारुविहायसोः ॥

मूलमाद्ये शिफायां स्याद्वनिकुञ्जान्तिकेषु च ॥ २६ ॥
शूलं प्रहरणे मृत्यौ केतने रोगयोगयोः ॥
शूला दुष्टवधार्थाय कीलके पण्ययोषिति ॥ २७ ॥
स्थूलं स्यात् पीवरे कूटे निष्प्रज्ञे पुनरन्यवत् ॥
अम्लो रसप्रभेदे स्यादाम्ली चाङ्गेरिकौषधौ ॥ २८ ॥
शुक्लो योगान्तरे श्वेते शुक्लश्च रजते मतम् ॥
मल्लः पात्रे कपाले च मत्स्यभेदे बलीयसि ॥ २९ ॥
भल्लो भल्ली च वाणे स्याद्भल्लो भल्लुक इष्यते ॥
भल्लातक्यान्तु भल्ली स्यादोल्लश्चार्द्रे च शूरणे ॥ ३० ॥
चुल्लचिल्लौ मतौ क्लिन्ने नेत्रे क्लिन्नाक्षिण पिल्लवत् ॥
आतापिनि भवेच्चिल्लश्चिल्ली स्याद्गौडवास्तुके ॥ ३१ ॥
चुल्ली चितायामुद्धाने क्वचिद्वाद्येऽप्युदीरिता ॥
बल्ली वीरुधि सन्ताने वल्कले कुसुमाम्बरे ॥ ३२ ॥
खल्ली तु हस्तपादावमर्द्दनाख्यरुजि स्मृता ॥
खल्लो वस्त्रप्रभेदे स्यान्निम्ने चर्माणि चातके ॥ ३३ ॥
आलुर्गलन्तिकायां स्यात् कन्दभेदे च भेलके ॥
पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः ॥ ३४ ॥
पीलुस्तालास्थिखण्डे च मालुः पत्रलतास्त्रियोः ॥
शालुः कषायद्रव्ये स्याच्चौरकाख्यौषधेऽपि च ॥ ३५ ॥
वलिश्चामरदण्डे च जरया श्लथचर्मणि ॥
उदरावयवे दैत्ये करपूजोपहारयोः ॥ ३६ ॥
गृहदारुविशेषे च गन्धकेऽपि क्वचिन्मतः ॥
दोला यानान्तरे नील्यां मेला स्यान्मेलके मुनौ ॥ ३७ ॥
इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च ॥
कीलः कफोणौ निर्घाते शङ्काज्वाले तु कीलवत् ॥ ३८ ॥

शिला कुनद्यां दृषदि द्वाराधःस्थितदारुणि ॥
शिलं शिली भवेदुञ्छे गण्डूपद्यां यथाक्रमम् ॥ ३९ ॥
तुला पलशते राशौ भाण्डे स्याद् दृश्यमानयोः ॥
गृहाणां दारुबद्धायां पीठिकायामपीष्यते ॥ ४० ॥
वेला काले च जलधेस्तीरनीरविकारयोः ॥
अक्लिष्टमरणे रागे सीम्नि वाचि बुधास्त्रियाम् ॥ ४१ ॥
भोजनेऽपीश्वराणां स्याज्झला दुहितरि स्मृता ॥
आतपोर्मिषु लुकायां झाली क्वापि विलोक्यते ॥ ४२ ॥
कला स्यान्मूलविद्धौ शिल्पादावंशमात्रके ॥
षोडशांशे च चन्द्रस्य कलनाकालयोः कला ॥ ४३ ॥
कलं शुक्रे कलो जीर्णेऽप्यव्यक्तमधुरध्वनौ ॥
लोला जिह्वाकमलयोर्लोलश्चलसतृष्णयोः ॥ ४४ ॥

लीलां विदुः केलिविलासखेला-
शृङ्गारभावप्रभवक्रियासु ॥
हेलामवज्ञानविलासयोश्च
हाला सुरायां नृपतौ च हालः ॥ ४५ ॥

गोला सखीवर्त्तुलयोर्गोलं लक्ष्यानुसारतः ॥
पत्राञ्जने कुनद्याश्च गोदावर्याश्च मण्डले ॥ ४६ ॥
अलिः सुरापुष्पलिहोरालिस्तु विशदाशये ॥
आलिः पङ्क्तौ च सख्याञ्च सेतौ च परिकीर्त्तिता ॥ ४७ ॥
कलिः स्यात् कलहे शूरे कालिरन्त्ययुगे युधि ॥
धूलिः सङ्ख्यान्तरे रेणौ डुलिस्तु कमठे मुनौ ॥ ४८ ॥
मौलिः किरीटे धम्मिल्ले कङ्केलिद्रुमचूडयोः ॥
शालिस्तु गन्धमार्ज्जारे कलमादिषु च स्मृतः ॥ ४९ ॥
पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रदेशयोः ॥

पालिः प्रस्थे च यूकायां जातश्मश्रुस्त्रियामपि ॥ ५० ॥
झिल्ली स्यादातपरुचि वर्त्त्यामुद्वर्त्तनांशुके ॥
वल्ली स्यादजमोदायां पुष्पभेदेऽपि वीरुधि ॥ ५१ ॥
पल्ली कुटीग्रामकयोः पल्लः स्थूलकुशूलके ॥
तल्ली तरुण्यां तल्लस्तु जलाधारान्तरेऽपि च ॥ ५२ ॥

लत्रिकम् ॥

कमलं सलिले ताम्रे जलजे लोम्नि भेषजे ॥
मृगभेदे च कमलः कमला श्रीवरास्त्रियोः ॥ ५३ ॥
चपलः पारदे मीने चौरके प्रस्तरान्तरे ॥
चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च ॥ ५४ ॥
चपलं क्षणिके शीघ्रे चपलश्चिकुरे चले ॥
उपलः प्रस्तरे रत्ने शर्करायां स्मृतोपला ॥ ५५ ॥
उत्पलं मांसशून्ये स्यात कुष्ठेन्दीवरयोरपि ॥
अनलो वासुदेवेऽग्नावनलो वसुवातयोः ॥ ५६ ॥
शकलं त्वचि खण्डे स्याद्रागवस्तुनि वल्कले ॥
गरलन्तु विषे माने गरलं तृणपूलके ॥ ५७ ॥
तरलश्चञ्चले षिङ्गे हारमध्यमणावपि ॥
भासुरे चाऽथ तरला यवागूसुरयोर्मता ॥ ५८ ॥
सरलः पूतिकाष्ठे स्यादुदारावक्रयोरपि ॥
कपिलो मुनिभेदे स्याद् वासुदेवे च पावके ॥ ५९ ॥
कपिला शिंशपायाश्च रेणुकागोविशेषयोः ॥
पुण्डरीककरिण्याश्च पिङ्गे तु कपिलोऽन्यवत् ॥ ६० ॥
पललं तिलचूर्णे स्यात् पललं पङ्कमांसयोः ॥
पललो यातुधाने स्यात् पटलं छदिषि व्रजे ॥ ६१ ॥
पिटके नेत्ररोगे च तिलके च परिच्छदे ॥

जगलः पिष्टमद्ये च मेदके मदनद्रुमे ॥ ६२ ॥
कितवे छगलश्छागे छगली छागमातरि ॥
वृद्धदारकभैषज्ये छगलं नीलवाससि ॥ ६३ ॥
पिप्पलो बोधिवृक्षे स्यात् पक्षिभेदे निरङ्कुले ॥
पिप्पलं वसनच्छेदे भेदेऽपि सलिले मतम् ॥ ६४ ॥
कणायां पिप्पली चोक्ता धवलः सुन्दरे सिते ॥
महोक्षे चाऽथ धवली सौरभेय्यामुदीरिता ॥ ६५ ॥
कुवलश्चोत्पले मुक्ताफलेऽपि बदरीफले ॥
कुशलः शिक्षिते क्षेमपर्याप्तिसुकृतेषु च ॥ ६६ ॥
कुशलं मुषलं तु स्यादयोऽग्रे मुषली मता ॥
तालमूल्यामाखुपर्णी गृहगोधिकयोरपि ॥ ६७ ॥
निचुलो हिज्जलतरौ निचुलश्च निचोलके ॥
पिचुलो झावुकेऽपि स्याद् हिज्जले जलवायसे ॥ ६८ ॥
विपुलः पृथुलेऽगाधे मेरुपश्चिमभूधरे ॥
तुमुलः कलिवृक्षे स्यात्तुमुलं रणसङ्कुले ॥ ६९ ॥
बहुलः कृष्णपक्षेऽग्नौ शितौ च बहुला गवि ॥
एलायां नीलिकायाञ्च बहुला कृत्तिकासु च ॥ ७० ॥
बहुलं प्राज्यनभसोर्मातुलो मदनमद्रुमे ॥
मातृभ्रातरि धुत्तूरे व्रीहिभेदेऽपि मातुलः ॥ ७१ ॥
कुटिलं वाच्यवद् भुग्ने कुटिला सरिदन्तरे ॥
जटिलस्तु जटायुक्ते जटिला मांसिकौषधौ ॥ ७२ ॥
सुतलप्रतलौ चेति पातालभुवनद्वये ॥
स्यातामट्टालिकाबन्धे तताङ्गुलिकरे क्रमात् ॥ ७३ ॥
पित्तलं तैजसद्रव्ये पित्तलः पित्तसङ्गते ॥
पित्तला तोयपिप्पल्यां निस्तलं वर्तुले चले ॥

कुन्तलः स्याद्यवे देशे केशलाङ्गलयोरपि ॥ ७४ ॥
कम्बलो नागराजे स्यात् सास्नाप्रावारयोः कृमौ ॥
कम्बलश्चोत्तरासङ्गे कम्बलं सलिले मतम् ॥ ७५ ॥
शम्बलं कुलपाथेयमत्सरेषु समीरितम् ॥
कन्दलस्तु कपाले स्यादुपरागे नवाङ्कुरे ॥ ७६ ॥
कलध्वनौ कन्दली तु मृगपक्षिविशेषयोः ॥
पिङ्गलः स्यान्मुनौ रुद्रे चण्डांशोः पारिपार्श्वके ॥ ७७ ॥
निधिभेदे कपावग्नौ पिङ्गलः कपिलेऽन्यवत् ॥
करायिकायां वेश्यायां पिङ्गला कुमुदस्त्रियाम् ॥ ७८ ॥
जङ्गलो जलनिर्मुक्तदेशे मांसे च जङ्गलम् ॥
मङ्गलं श्रेयसि श्वेतदूर्वायामपि मङ्गला ॥ ७९ ॥
सर्वार्थलक्षणे चापि मङ्गलं समुदीरितम् ॥
कुण्डलं वलये पाशे कुण्डलं कर्णपूरणे ॥
गुडूच्यां काञ्चनादौ च कुण्डली समुदीरिता ॥ ८० ॥

स्यान्मण्डलं द्वादशराजके च
देशे च बिम्बे च कदम्बके च ॥
कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि
भुजङ्गभेदे शुनि मण्डलः स्यात् ॥ ८१ ॥

स्यादर्गलन्तु कल्लोले दण्डे चान्तःकपाटयोः ॥
निर्म्मलं विमले विद्यान्निर्म्माल्याभ्रकयोरपि ॥ ८२ ॥
शौष्कलः शुष्कमांसस्य पणके पिशिताशिनि ॥
पांशुलः पुंश्चले शम्भोः खट्वाङ्गे पांशुला भुवि ॥ ८३ ॥
सङ्कुलं वाच्यवद्व्याप्तेऽविस्पष्टार्थवचस्यपि ॥
उज्ज्वलो दीप्तशृङ्गारविशदेषु विकाशिनि ॥ ८४ ॥

वञ्जुलो वेतसाशोकतिनिशेष्वऽथ मञ्जुलम् ॥
निकुञ्जे शैवले मञ्जौ जलरङ्कौ तु मञ्जुला ॥ ८५ ॥
पिञ्जलन्तु हरिद्राभे कुशपत्रेऽपि पिञ्जलम् ॥
पुद्गलः सुन्दराकारे पुद्गलश्चात्मदेहयोः ॥
जम्भलो देवताभेदे जम्बीरेऽपि च जम्भलः ॥ ८६ ॥
कुम्भिलः श्यालके चौरे श्लोकच्छायाहरे झषे ॥
चन्द्रिलो नापिते ख्यातो हरवास्तुकशाकयोः ॥ ८७ ॥
ग्रन्थिलो ग्रन्थिसहिते करीरद्रौ विकङ्कते ॥
वामिलो दाम्भिके यामे रामिलो रमणे स्मरे ॥ ८८ ॥
वार्दलं दुर्दिने मेलानन्दायामपि वार्दलः ॥
तण्डुलाख्या विडङ्गे स्याद्धान्यादिनिकरेऽपि च ॥ ८९ ॥
वृषलः कथितः शूद्रे चन्द्रगुप्ते च वाजिनि ॥
निष्कलस्तु कलाशून्ये नष्टबीजे तु वाच्यवत् ॥ ९० ॥
पाकलं कुष्ठभैषज्ये पाकलः कुञ्जरज्वरे ॥
पाचलो राधनद्रव्येऽप्यनिलानलयोरपि ॥ ९१ ॥
माचलो वन्दिचौरे स्याद्ग्राहे रक्षसि चाऽमये ॥
पाटलः श्वेतरक्ते स्यादाशुव्रीहौ च पाटलः ॥ ९२ ॥
पाटलौ पाटलाऽपि स्यादस्याः पुष्पेऽपि पाटलम् ॥
लोहलः शृङ्खलाधार्ये भवेदव्यक्तवाचि च ॥ ९३ ॥
कोहलो मद्यभेदे स्यात् कोहलः स्यान्मुनावऽपि ॥
तैतिलो गण्डके प्रोक्तस्तैतिलं करणान्तरे ॥ ९४ ॥
हेमलः स्वर्णकारे स्यात् कृकलासे शिलान्तरे ॥
श्यामलो मेचकेऽश्वत्थे कोमलो मृदुले दले ॥ ९५ ॥
कामलः कामुके रोगे मरुदेशवसन्तयोः ॥
पेशलो रुचिरे दक्षे गोकिलो मुषले हले ॥ ९६ ॥

गौरिलो लोहचूर्णे स्याद्गौरिलो गौरसर्षपे ॥
फेनिलः स्यादरिष्टे च फेनिलं बदरीफले ॥ ९७ ॥
मदनस्य फले चाऽथ वाच्यवत् फेनवत्यपि ॥
शावलाख्या तु शैवाले शैलेयेऽपि च शावलम् ॥ ९८ ॥
शैवलं पद्मकाष्ठे च शैवलश्च जलाश्चले ॥
शीतलं पुष्पकासीसे शैलजे मलयोद्भवे ॥ ९९ ॥
भवेदासनपर्ण्याश्च शीतलः शिशिरेऽन्यवत् ॥
कल्लोलो हर्ष उल्लोले कल्लोलः परिपान्थिनि ॥ १०० ॥
पटोलमोषधीवस्त्रभिदोर्ज्योत्स्न्यां पटोल्यऽपि ॥
काकोलो विषभेदे स्याद्द्रोणकाककुलालयोः ॥ १०१ ॥
तमालस्तिलके खड्गे तापिञ्छे वरुणद्रुमे ॥
सुवेलः प्रणते शान्ते सुवेलः पर्वतान्तरे ॥ १०२ ॥
अवेलस्त्वपलापे स्यादवेला पूगचूर्णके ॥
कपालं शिरसोऽस्थिन स्याद् घटादिशकले व्रजे ॥ १०३ ॥
कुष्ठरोगविशेषे च गोपालो गोपभूपयोः ॥
किट्टालस्ताम्रकलशे किट्टालो लोहगूथके ॥ १०४ ॥
पातालं नागलोके स्यात् पातालं वडवानले ॥
प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे ॥ १०५ ॥
अरालः कुटिले सर्ज्जरसे समददन्तिनि ॥
करालो दन्तुरे तुङ्गे करालश्च कुठेरके ॥ १०६ ॥
करालोद्धूनतैलेऽपि करालो भीषणेऽन्यवत् ॥
शृगालो जम्बुके दैत्ये शृगाली डमरे विदुः ॥ १०७ ॥
कुलालः कुम्भकारे स्यात् कुक्कुभे कौशिकेऽपि च ॥
कुद्दालो युगपत्रे स्यात् कुद्दालो भूमिदारणे ॥ १०८ ॥
विडालो नेत्रपिण्डे स्याद्विडालोऽपि खगान्तरे ॥

विडाली पूतनाभेदे लताघूकेऽपि शस्यते ॥
जम्बालं शैवले पङ्के कीलालं रुधिरे जले ॥ १०९ ॥
वण्ठीलं शूरयोर्युद्धे नौकायाश्च खनित्रके ॥
आभीलश्चाऽपि कृच्छ्रे स्यादाभीलश्च भयानके ॥ ११० ॥
नाभीलं नाभिगर्भाण्डे वङ्क्षणे प्रोक्तमास्त्रियाः ॥
उत्फुल्लः करणे स्त्रीणामुत्ताले च विकस्वरे ॥ १११ ॥
शयालुः स्यादजगरे निद्राशीलेऽपि कुक्कुरे ॥
श्रद्धालुर्दोहदिन्याश्च श्रद्धावति तु वाच्यवत् ॥ ११२ ॥
लाङ्गुलं मेहने पुच्छे शार्दूलो राक्षसान्तरे ॥
व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः ॥ ११३ ॥
वातूलो वातसङ्घाते वातुले मारुतासहे ॥
कुकूलं शङ्कुसङ्कीर्णे श्वभ्रे चाऽपि तुषानले ॥ ११४ ॥
कुकूलं स्याद् दुकूलन्तुक्षौमे सूक्ष्मांशुकेऽपि च ॥
जम्बूलो जम्बुविटपे जम्बूलः क्रकचच्छदे ॥ ११५ ॥
चषालो होमकुण्डे स्याद्वृत्ते चोत्ताल उत्कटे ॥
श्रेष्ठेऽपि विकरालेऽपि स्यादुत्तालः प्लवङ्गमे ॥ ११६ ॥
चूडाली तूच्चटायां स्याच्चूडावति तु वाच्यवत् ॥
विशाला त्विन्द्रवारुण्यां विशालोऽज्जायिनीपुरि ॥ ११७ ॥
विशालो वृक्षभेदेऽपि विशालः पृथुलेऽन्यवत् ॥
मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः ॥ ११८ ॥
शृङ्खला पुंस्कटीवस्त्रबन्धेऽपि निगडेऽपि च ॥
कुचेला विद्धपर्ण्यां स्यात् कुचेलस्तु कुवाससि ॥ ११९ ॥
अचला वसुधायां स्यादचलः शैलकीलयोः ॥
चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलः कामुकेऽनिले ॥ १२० ॥
इल्वला तारकाभेदे इल्वलो दैत्यमत्स्ययोः ॥

पिच्छिला शाल्मलीसिन्धुभेदपोतकिकासु च ॥ १२१ ॥
पिच्छिला शिंशपायाञ्च पिच्छिलो विज्जलेऽन्यवत् ॥
सप्तला पाटलौ गुञ्जानवमालिकयोरपि ॥ १२२ ॥
भवेच्चर्म्मकशायाञ्च महिला भीरुगुन्द्रयोः ॥
सिध्मला मत्स्यचूर्णे स्यात् सिध्मलश्च किलासिनि॥१२३॥
सन्धिला तु सुरुङ्गायां नदीमन्दिरयोरपि ॥
रसाला मार्ज्जितायां स्याज्जिह्वादूर्व्वाविदारिषु ॥
रसालं सिह्लके बोले रसालश्चेक्षुचूतयोः ॥ १२४ ॥
विमला शीतलायां स्याद् भुवो भेदे च निर्म्मले ॥
विमले चाऽमला लक्ष्म्यामऽमलं विशदेऽभ्रके ॥ १२५ ॥
श्रीफली नीलिकाधात्र्योर्माल्लूरे श्रीफलः स्मृतः ॥
खण्डाली तैलमाने स्यात् सरसीकामुकस्त्रियोः ॥ १२६ ॥
पातली वागुरायां स्यान्नारीमृत्पात्रभेदयोः ॥
जाङ्गली शूकशिम्ब्यां स्याज्जाङ्गलश्च कपिञ्जले ॥ १२७ ॥
लाङ्गली गजपिप्पल्यां लाङ्गलं कुसुमान्तरे ॥
सीरेऽपि लाङ्गलं तालगृहदारुविशेषयोः ॥ १२८ ॥
अङ्गुली करशाखायां कर्णिकायां गजस्य च ॥
जाङ्गुली विषविद्यायां जाङ्गुलं जालिनीफले ॥ १२९ ॥
कदली वैजयन्त्याञ्च रम्भायां हरिणान्तरे ॥
कदला शाल्मलीब्राह्मीडिम्बिकासु च कथ्यते ॥ १३० ॥
नकुली कुक्कुटीमांस्योर्नकुलः पाण्डवे पशौ ॥
नाकुली कुक्कुटीकन्दे नाकुली चव्यरास्नयोः ॥ १३१ ॥
नैपाली नवमालीमनःशिलासुवहासु च ॥
ताम्बूली नागवल्ल्याञ्च ताम्बूलं क्रमुकेऽपि च ॥ १३२ ॥
पञ्चाली पुत्रिकागीतयोः पञ्चालो जनदेशयोः ॥

शाल्मली तरुभेदे स्याद्दीपभेदे च शाल्मली ॥ १३३ ॥
केवलो ज्ञानभेदे स्यात् केवलश्चैककृत्स्नयोः ॥
निर्णीते केवलश्चोक्तं केवलः कुहने क्वचित् ॥ १३४ ॥
काहली तु तरुण्यां स्यात् काहलं भृशशुष्कयोः ॥
वाद्यभाण्डविशेषे तु काहला काहले खले ॥ १३५ ॥
गन्धोली वरटाभद्राशटीषु कथिता बुधैः ॥
अञ्जली कुडवे विद्यादञ्जलिः करसम्पुटे ॥ १३६ ॥

लचतुष्कम् ॥

मदकलः स्यान्मत्तेभे मदेनाव्यक्तवाचि च ॥
भवेत् कलकलः सर्ज्जरसे कोलाहलेऽपि च ॥ १३७ ॥
स्मृतो विचिकिलो मल्लीप्रभेदे मदनेऽपि च ॥
बृहन्नलो गुडाकेशे महापोटगले मतः ॥ १३८ ॥
परिमलो विमर्द्दे च स्यान्मनोहरगन्धवत् ॥
रतोपमर्द्दविकसद्देहरागादिसौरभे ॥ १३९ ॥
यवफलः स्मृतो वेणौ मांसीकुटजयोरपि ॥
मुक्ताफलन्तु कर्पूरे मौक्तिके लवलीफले ॥ १४० ॥
सदाफलः स्कन्दफले नारिकेलेऽप्युदुम्बरे ॥
विदुः कर्मफलं कर्मरङ्गकर्मविपाकयोः ॥ १४१ ॥
मृत्युफलो महाकाले कदल्यां मृत्युफल्यऽपि ॥
भवेद्वायुफलं शक्रकार्मुके करकेऽपि च ॥ १४२ ॥
हलाहलोविषे ज्येष्ठ्यां हयलालाह्वयोरगे ॥
कुतूहलं कौतुके स्यात् प्रशस्तेऽपि कुतूहलम् ॥ १४३ ॥
दलामलं दमनके तथा मरुवकेऽपि च ॥
महाबलं सीसके स्याद् बलाढ्येऽपि महाबला ॥ १४४ ॥
भवेदतिबलायाञ्च खतमालो बलाहके ॥

धूमेऽपि कन्दरालः स्यात् पर्कटीगर्दभाण्डयोः ॥ १४५ ॥
महाकालस्त्रिनयने किम्पाके प्रमथान्तरे ॥
महानीलो भृङ्गराजे मणिनागविशेषयोः ॥ १४६ ॥
भवेद् बहुफलाभिख्याऽऽमलकीनीपवृक्षयोः ॥
जलाश्चलं स्वतोवारिनिर्गमे शैवलेऽपि च ॥ १४७ ॥
गण्डशैलो ललाटे स्याच्च्युते स्थूलोपले गिरेः ॥
उलूखलं गुग्गुले स्यात् कण्डन्यर्थे उलूखलम् ॥ १४८ ॥
चक्रवालोऽद्रिभेदे स्याच्चक्रवालन्तु मण्डले ॥
स्मृतः पोटगलः काशे नले पोटगलो झषे ॥ १४९ ॥
हस्तिमल्लोऽभ्रमातङ्गे हस्तिमल्लो विनायके ॥
भस्मतूलं ग्रामकूटे पांशुवर्षे हिमेऽपि च ॥ १५० ॥
वातकेलिः कलालापे षिङ्गानां दन्तलेखने ॥
कमण्डलुः स्यात् करके पर्कटीपादपेऽपि च ॥ १५१ ॥
अक्षमालाऽक्षसूत्रे स्यादरुन्धत्यामपि स्मृता ॥
मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे ॥ १५२ ॥
ध्वनिलीला स्मृता वेणौ काहलावीणयोरपि ॥
रजस्वला पुष्पवत्यां सैरिभेऽपि रजस्वलः ॥ १५३ ॥
एकाष्ठीलामपि प्राहुः शिवमल्लौषधीभिदोः ॥
अतिबला बलाभेदे प्रवालेऽतिबलो मतः ॥ १५४ ॥
भद्रकाली तु गन्धोल्यामुमायामोषधीभिदि ॥
हरिताली नभोरेखादूर्वाखड्गलतासु च ॥ १५५ ॥
अन्धपाली स्मृता कोष्ठ्यां धात्रिकापरिरम्भयोः ॥
गन्धफली प्रियङ्गौ स्यात् कोरके चम्पकस्य च ॥ १५६ ॥

लपञ्चकम् ॥

आसुतीबल इत्याख्या कन्यापालकयज्वनोः ॥

स्यात् पण्डुकम्बलः श्वेतकम्बले च शिलान्तरे ॥ १५७ ॥
एककुण्डल इत्येष सौनन्दिनि धनाधिपे ॥
भवेदुद्दण्डपालस्तु सर्पमत्स्यप्रभेदयोः ॥ १५८ ॥
कृपीटपालमिच्छन्ति केनिपातसमुद्रयोः ॥
भवेत् सुरतताली तु दूतिकायां शिरःस्रजि ॥ १५९ ॥

इति लान्तवर्गः ॥

—:०:—

वैककम् ॥

वं प्रचेतसि जानीयादिवार्थे च तदव्ययम् ॥
स्वं ज्ञातावात्मधनयोरात्मीये च प्रचक्ष्यते ॥ १ ॥

वद्विकम् ॥

भवः संसारसम्प्राप्तिश्रेयःशङ्करजन्मसु ॥
दवो दाव इव ख्यातो वनाग्निवनयोरपि ॥ २ ॥
द्रवः प्रद्रावरसयोर्गतौ नर्मणि विद्रवे ॥
धवः पत्यौ नरे धूर्त्ते वृक्षभेदेऽपि कीर्त्तितः ॥ ३ ॥
जवो वेगिनि वेगे स्यादोण्ड्रपुष्पे जवा मता ॥
लवो लेशे विनाशे च छेदने रामनन्दने ॥ ४ ॥
प्लवः कारण्डवे भेके कुलके भेलके कपौ ॥
शब्दे प्लुतगतौ प्लक्षे चण्डालजलकाकयोः ॥ ५ ॥
प्लवं गन्धतृणे प्रोक्तं कैवर्त्तीमुस्तकेऽपि च ॥
हवो यज्ञे तथाह्वाने निदेशेऽपि हवो मतः ॥ ६ ॥
शवो मृते शवं नीरे सवः सन्धानयज्ञयोः ॥
क्षवः क्षुते राजिकायां नवं नव्ये स्तवे विदुः ॥ ७ ॥
ध्रुवः कीले शिवे शङ्कौ वसौ योगे वटे मुनौ ॥
ध्रुवा मूर्वाशालपर्ण्योर्गीतिस्रुग्भेदयोरपि ॥ ८ ॥

ध्रुवन्तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत् ॥
स्तुवाख्या सल्लकीमूर्वास्रुग्भेदेषु च विश्रुता ॥ ९ ॥
शिवं मोक्षे सुखे भद्रे सलिलेऽथ शिवो हरे ॥
वेदे योगान्तरे कीले वालुके गुग्गुलेऽपि च ॥ १० ॥
पुण्डरीकद्रुमे चाऽपि शिवा झण्टामलौषधौ ॥
अभयाऽऽमलकीगौरीक्रोष्ट्रीसक्तुफलासु च ॥ ११ ॥
दिवं स्वर्गेऽन्तरीक्षे च क्लीवं शण्डेऽप्यपौरुषे ॥
जीवो वृक्षप्रभेदे स्याज्जीवः प्राणिनि गीष्पतौ ॥ १२ ॥
जीवा जीवान्तिकाभूम्योर्मौर्वीशिञ्जितवृत्तिषु ॥
वचायामपि जीवा स्याज्जीवं जीव्यश्च जीविते ॥ १३ ॥
भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु ॥
क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु ॥ १४ ॥
देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये ॥
देवी भट्टारिकायाञ्च तेजनीस्पृक्कयोरपि ॥ १५ ॥
सत्त्वं द्रुमे पिशाचादौ बले द्रव्यस्वभावयोः ॥
आत्मत्वे व्यवसाये च चित्ते प्राणेषु जन्तुषु ॥ १६ ॥
सान्त्वं सामनि दाक्षिण्ये कण्वं पापे मुनौ विदुः ॥
किण्वं पापे सुराबीजे बिल्वन्तु श्रीफले फले ॥ १७ ॥
तत्त्वं वाद्यप्रभेदे स्यात् स्वरूपे परमात्मनि ॥
ह्रस्वखर्वाविमौ शब्दावेकार्थौ वामनार्थयोः ॥ १८ ॥
विश्वं समस्ते जगति विश्वदेवेऽपि नागरे ॥
विश्वा चाऽतिविषायां स्यादश्वः पुम्भेदवाजिनोः ॥ १९ ॥
पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च ॥
प्राध्वं सुप्रणते चातिदूरवर्त्मनि बन्धने ॥ २० ॥
पक्कं परिणतार्थे स्याद्विनाशाभिमुखेऽपि च ॥

द्वन्द्वो रहस्ये कलहे द्वन्द्वं मिथुनयुग्मयोः ॥ २१ ॥
ऊर्द्ध्वं स्यादुच्छ्रिते तुङ्गे चोपरिष्टादपि स्मृतम् ॥
दिवं द्यौः स्वर्गलोके च गगने च प्रयुज्यते ॥ २२ ॥
अविः शैले रवौ मेषे भवेन्मूषिककम्बले ॥
ऋतुमत्यामविः प्रोक्ता शिविर्भूर्ज्जे नृपान्तरे ॥ २३ ॥
कविः काव्यकरे सूरौ कविर्वाल्मीकिशुक्रयोः ॥
कवी खलीने कथिता छविः शोभारुचोर्मता ॥ २४ ॥
ग्रीवाऽपि कन्धरायां स्यात्तच्छिरायामपीष्यते ॥
रेवा तरङ्गिणीभेदे रेवा नील्यां स्मरस्त्रियाम् ॥ २५ ॥
लट्वा करञ्जभेदेऽस्य फले वाद्ये खगान्तरे ॥
नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससः ॥ २६ ॥
पृथ्वी भूमौ पृथौ हिङ्गुपत्रिकाकृष्णजीरयोः ॥
लघ्वी ह्रस्वविवक्षायां प्रभेदे स्यन्दनस्य च ॥ २७ ॥

वत्रिकम् ॥

प्रभवो जलमूले स्याज्जन्मभूमौ पराक्रमे ॥
आद्योपलब्धयोः स्थाने विभवो निर्वृतौ धने ॥ २८ ॥
प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचने ॥
तोकोत्पादे च सचिवः सहाये मन्त्रिणि स्मृतः ॥ २९
कितवो धूर्त्तवन्मत्ते वञ्चके कनकाह्वये ॥
त्रिदिवास्त्रिदशावासे त्रिदिवा सरिदन्तरे ॥ ३० ॥
बल्लवः सूपकारे स्याद्भीमसेनेऽपि गोदुहि ॥
पल्लवः स्यात् किसलये विटपे विस्तरे बले ॥ ३१ ॥
शृङ्गारे रक्तरागे च विद्रवस्तु पलायने ॥
युद्धे च पुङ्गवः श्रेष्ठे वृषभे भेषजान्तरे ॥ ३२ ॥
उद्धवो मातुले विष्णोरुत्सवे क्रतुपावके ॥

उत्सवो मह उत्सेक इच्छाप्रसरकोपयोः ॥ ३३ ॥
केशवो वासुदेवे स्यात् पुन्नागे केशवत्यपि ॥
कैतवन्तु छले द्यूते फेरवो जम्बुकेऽस्रपे ॥ ३४ ॥
रौरवो नरके घोरे कैरवः कितवे रिपौ ॥
कैरवं कुमुदे चोक्तं चान्द्रिकायाञ्च कैरवी ॥ ३५ ॥
भैरवं भीषणे गर्भे भैरवः समुदाहृतः ॥
सैन्धवो मणिमन्थेऽपि सिन्धुदेशोद्भवाश्वयोः ॥ ३६ ॥
वाड़वं करणे स्त्रीणामौर्वे विप्रेऽपि वाड़वः ॥
वाड़वं वड़वासङ्घे वाड़वो रागनागयोः ॥ ३७ ॥
आश्रवः स्यात् प्रतिज्ञाने क्लेशे च वचनास्थिते ॥
शात्रवं भावसंहत्योः शत्रूणां शात्रवो द्विषि ॥ ३८ ॥
माधवस्तु वसन्ते स्याद्वैशाखे गरुड़ध्वजे ॥
माधवी मादिरायाञ्च कुट्टन्यामतिमुक्तके ॥ ३९ ॥
मधुनः शर्करायाञ्च गालवो मुनिलोध्रयोः ॥
आर्त्तवन्त्वृतुसम्भूते स्त्रीरजःपुष्पयोरपि ॥ ४० ॥
भार्गवः पर्शुरामे स्याद्गजे शुक्रे सुधन्विनि ॥
भार्गवी हैमवत्याञ्च कमलासितदूर्वयोः ॥ ४१ ॥
आहवः सङ्गरे यागे राघवो रघुवंशजे ॥
महामीनप्रभेदेऽपि जलधे राघवः स्मृतः ॥ ४२ ॥
ताण्ड़वं कथितं नृत्ये तृणभेदेऽपि ताण्ड़वम् ॥
निह्नवं निकृतौ विद्यादविश्वासापलापयोः ॥ ४३ ॥
सम्भवः कथितो होतावुत्पत्तौ मेलकेऽपि च ॥
आधारानातिरिक्तत्व आधेयस्य च सम्भवः ॥ ४४ ॥
बान्धवो बन्धुसुहृदोः पञ्चत्वं निधने स्मृतम् ॥
पञ्चनामपि भावे च प्रभावः शक्तितेजसोः ॥ ४५ ॥

अभावः स्यादसत्तायामभावो निधनेऽपि च ॥
विभावः स्यात् परिचितौ कामस्योद्दीपनेऽपि च ॥ ४६ ॥
निष्पावः सूर्यपवने राजमाषे काडिङ्गरे ॥
पचने शिम्बिकायाञ्च निष्पावो निर्विकल्पके ॥ ४७ ॥
सुग्रीवः शोभनग्रीवे सुग्रीवो वानराधिपे ॥
राजीवाख्या मृगे मत्स्ये पद्मे राजोपजीविनि ॥ ४८ ॥
गाण्डीवं गाण्डिवं जिष्णोः कोदण्डे कार्मुकेऽपि च ॥
अक्षीवश्च शिरे विद्यादमत्तेऽक्षीवमन्यवत् ॥ ४९ ॥
पार्थिवो नृपतौ भूमिविकारे पार्थिवोऽन्यवत् ॥
पार्थिवी स्यात् क्षमायाञ्च दीदिविर्धिषणान्नयोः ॥ ५० ॥
प्रसेवः कथितो धीरैर्वीणाङ्गस्यूतयोरपि ॥
वडवाऽश्वाकुम्भदास्योः स्त्रीविशेषे द्विजास्त्रियाम् ॥ ५१ ॥
कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके ॥
सुषवी कारवेल्ले स्यात् कृष्णजीरकजीरयोः ॥ ५२ ॥

वचतुष्कम् ॥

भवेदभिषवः स्नाने मद्यसन्धानयज्ञयोः ॥
उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि॥ ५३ ॥
परिप्लवश्चञ्चले स्यादाकुलेऽपि परिप्लवः ॥
कुशीलवस्तु वाल्मीकौ नटयाचकयोरपि ॥ ५४ ॥
अपह्नवोऽपलापे च स्नेहे चाऽपह्नवो मतः ॥
पराभवस्तिरस्कारे विनाशे च पराभवः ॥ ५५ ॥
भवेत् पारशवः पारस्त्रैणे शूद्रासुते द्विजात् ॥
शस्त्रेऽप्यादीनवो दोषे परिक्लिष्टदुरन्तयोः ॥ ५६ ॥
विदुः शीतशिवं शम्यां शैलेयशतपुष्पयोः ॥
सैन्धवेऽपि पुटग्रीवो गर्गरीताम्रकुम्भयोः ॥ ५७ ॥

धामार्गवस्त्वपामार्गे देवदाल्यामपि स्मृतः ॥
अनुभावः प्रभावे स्यान्निश्चये भावसूचने ॥ ५८ ॥
बलदेवः स्मृतो वाते कालिन्दीभेदनेऽपि च ॥
बलदेवामपि प्राहुस्त्रायमाणौषधे बुधाः ॥ ५९ ॥
जलविल्वस्तु पञ्चाङ्गे कर्कटे जलचत्वरे ॥
रोहिताश्वो बृहद्धा नौ हरिश्चन्द्रे नृपात्मजे ॥ ६० ॥
सहदेवा बलादण्डोत्पलशारिवभेषजे ॥
सहदेवी तु सर्पाक्ष्यां सहदेवश्च पाण्डवे ॥ ६१ ॥
जीवञ्जीवश्चकोरे स्याद् द्रुमपक्षिविशेषयोः ॥

वपञ्चकम् ॥

आशितम्भवमन्नाद्ये तृप्तावाप्याशितम्भवः ॥ ६२ ॥

इति वान्तवर्गः ॥

—:०:—

शैककम् ॥

शं सुखे शर्मणि प्रोक्तं श्रेयसि शश्च शस्त्रके ॥

शाद्विकम्

वशमायत्ततायां स्याद्वशमिच्छाप्रभुत्वयोः ॥
वशा वन्ध्यासुतायोषास्त्रीगवीकारिणीषु च ॥ १ ॥
कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले ॥
कुशी फालेऽपि वल्गायां कुशा पापिष्ठमत्तयोः ॥ २ ॥
कुशो वाच्यवदाख्यातः स्पशः प्रणिधियुद्धयोः ॥
शशो गन्धरसे लोध्रे स्यात् पशौ पुरुषान्तरे ॥ ३ ॥
दर्शस्तु सङ्गमे सूर्यचन्द्रयोरवलोकने ॥
पक्षान्ते वैदिकविधौ दर्शश्च समुदाहृतः ॥ ४ ॥
स्पर्शो रुजायां दाने च स्पर्शने स्पर्शकेऽपि च ॥
विट् स्मृतो वैश्यमनुजप्रवेशे तु मनीषिभिः ॥ ५ ॥

पाशः कचान्ते सङ्घार्थः कर्णान्ते शोभनार्थकः ॥
छात्राद्यन्ते च निन्दार्थः पाशः पक्ष्यादिबन्धने ॥ ६ ॥
नाशः पलायने प्रोक्तो निधनानुपलम्भयोः ॥
काशस्तृणे स्यात् क्षवथौ वाराणस्यां तु काश्यपि ॥ ७ ॥
केशो दैत्यान्तरे बाले ह्रीवेरे च प्रचेतसि ॥
कीशो दिगम्बरे प्रोक्तः कीशः शाखामृगेऽपि च ॥ ८ ॥
ईशः प्रभौ शङ्करे स्यादीशा लाङ्गलदण्डके ॥
वेशो वेश्यागृहे प्रोक्तो नेपथ्ये गृहमात्रके ॥ ९ ॥
क्लेशो दुःखेऽपि रागादौ व्यवसायेऽपि च क्वचित् ॥
वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च ॥ १० ॥
दंशः स्यात् खण्डने दोषे दंशो मर्मणि कीर्त्तितः ॥
सर्पक्षतेऽपि सन्नाहवनमक्षिकयोरपि ॥ ११ ॥
अंशुर्लेशे रवौ रश्मावाशुर्व्रीहौ च सत्वरे ॥
पांशुर्धूलिषु शस्यार्थच्चिरसञ्चितगोमये ॥ १२ ॥
दृग्दर्शने लोचने च दृग्बुद्धौ वीक्षकेऽपि च ॥
दशा वर्त्ताववस्थायां वस्त्रांशे स्युर्दशा अपि ॥ १३ ॥
निशा दारुहरिद्रायां स्यात् त्रियामाहरिद्रयोः ॥
आशा तृष्णादिशोः प्रोक्ता राशिर्मेषादिपुञ्जयोः ॥ १४ ॥
पेशी पललपिण्ड्यां स्यान्मांस्यां खड्गपिधानके ॥
अण्डभेदेऽपि पेशी स्यात् सुपक्ककणिकेऽपि च ॥ १५ ॥

## शत्रिकम् ॥

कापिशः सिह्लके श्यावे माधव्यां कपिशी मता ॥
कुलिशो मत्स्यचण्डे स्याद्दम्भोलौ कुलिशं स्मृतम् ॥ १६ ॥
विवशः स्यादवश्यात्मा क्लिष्टदुष्टधियोरपि ॥
निस्त्रिंशो निर्दयेखड्गे सदृशन्तूचिते समे ॥ १७ ॥

बालिशः शावके मूर्खे लोमशो लोमसंयुते ॥
मेण्डके चाथ कासीसशृगालीजटिलासु च ॥ १८ ॥
लोमशा शूकशिम्ब्याश्च मर्कटीकाकजङ्घयोः ॥
महामेदातिबलयोः शाकिनीभिदि चेष्यते ॥ १९ ॥
विकाशो विजने व्यक्तौ सकाशः सदृशेऽन्तिके ॥
प्रकाशोऽतिप्रसिद्धे स्यात् प्रहासातपयोः स्फुटे ॥ २० ॥
नीकाशो निश्चये तुल्ये हताशो निर्दये खले ॥
कीनाशः कर्कशे क्षुद्रे कृतान्तपशुघातिनोः ॥ २१ ॥
सुखाशो राजतिनिशे शोभनाऽऽशप्रचेतसोः ॥
पिङ्गाशो मत्स्यभेदे स्यात्तथा पल्लीपतावपि ॥ २२ ॥
पिङ्गाशी नीलिकायाश्च पिङ्गाशं जात्यकाश्चने ॥
पलाशः किंशुके शट्यां हरिते राक्षसेऽपि च ॥ २३ ॥
पत्रे पलाशं संवेशः शयने चासनेऽपि च ॥
निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्त्तितः ॥ २४ ॥
निर्वेशो मूर्च्छने भोगे निर्वेशो वेतनेऽपि च ॥
प्रदेशो देशमात्रे स्यात्तर्ज्जन्यङ्गुष्ठसम्मिते ॥ २५ ॥
भित्तावपि प्रदेशः स्यात् सदेशोऽभ्यर्णदेशयोः ॥
निदेशः शासनोपान्तभाषणेऽपि प्रयुज्यते ॥ २६ ॥
आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि ॥
कर्कशः परुषे क्रूरे कृपणे निर्दये दृढे ॥ २७ ॥
इक्षौ साहसिके काशमर्दकम्पिल्लयोरपि ॥
गिरीशो वाक्पतौ रुद्रे गिरीशोऽद्रिपतावपि ॥ २८ ॥
उड्डीशो ग्रन्थभेदे स्यादुड्डीशश्चण्डिकापतौ ॥
तुङ्गीशः शङ्करे चन्द्रे पक्षीशस्तार्क्ष्यकृष्णयोः ॥ २९ ॥
उपांशुर्जपभेदे स्यादुपांशु विजनेऽव्ययम् ॥

दुःस्पर्शाख्या खरस्पर्शे कण्टकार्याञ्च वासके ॥ ३० ॥
विपाशाख्या सरिद्भेदपाशवर्ज्जितयोर्मता ॥
विकेशी पट्टवर्त्तौ स्याद्विकेशी निष्कचास्त्रियाम् ॥
भूकेशी वल्वजेषु स्याद् भूकेशः शैवले वटे ॥ ३१ ॥

शचतुष्कम् ॥

अपदेशः स्मृतो लक्ष्ये निमित्तव्याजयोरपि ॥
जीवितेशो यमे कान्ते जीवातौ जीविताधिपे ॥ ३२ ॥
आश्रयाशो हुतवहे भवेदाश्रयनाशके ॥
नागपाशः स्मृतः स्त्रीणां करणे वरुणायुधे ॥ ३३ ॥
पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च ॥
रमे सोमलतायाञ्च हुतशेषेऽपि कीर्त्तितः ॥ ३४ ॥
परिवेशः परिवृत्तौ भानोः साविधमण्डले ॥
प्रातिष्कशः सहाये स्याद्वार्त्ताहरपुरोगयोः ॥ ३५ ॥
उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि ॥
भूमिस्पृग्वैश्यनरयोः पूरदृक् स्यात् खले शनौ ॥ ३६ ॥
अपभ्रंशोऽपशब्दे स्याद्भाषाभेदावपातयोः ॥
उपदंशोऽवदंशे स्यान्मेण्ढ्रे रोगेऽपि वर्त्तते ॥ ३७ ॥
खण्डपर्शुः पर्शुरामे शङ्करे चूर्णलेपिनि ॥
खण्डामलकभैषज्ये सिंहिकातनयेऽपि च ॥ ३८ ॥
पादपाशी खण्डकायां शृङ्खलाकटकेऽपि च ॥
स्मृता पञ्चदशी पौर्णमास्यमावास्ययोरपि ॥ ३९ ॥

शपञ्चकम् ॥

धूर्जटौ खण्डपरशुर्जामदग्न्ये विधुन्तुदे ॥
खण्डामलकभैषज्ये चूडालेऽपि स्मृतो बुधैः ॥ ४० ॥

इति शान्तवर्गः ॥

वृषः स्याद्वासके धर्मे सौरभेये च शुक्रले ॥
पुंराशिभेदयोः शृङ्ग्यां मूषिकश्रेष्ठयोरपि ॥ १ ॥
कपिकच्छ्वां वृषा प्रोक्ता व्रतिनामासने वृषी ॥
विषन्तु गरले तोयेऽतिविषायां विषा भवेत् ॥ २ ॥
तुषो धान्यत्वचि ख्यातो विभीतकतरावपि ॥
निषश्च स्पर्शने व्याजे तर्षो लिप्सापिपासयोः ॥ ३ ॥
वर्षं संवत्सरे वृष्टौ जम्बूद्वीपे घने विदुः ॥
प्रावृट्काले तु वर्षाः स्युः कर्षः कर्षणमानयोः ॥ ४ ॥
माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः ॥
मेषो राशिविशेषे स्यादुरणे भेषजान्तरे ॥ ५ ॥
शेषः संकर्षणेऽनन्त उपयुक्ततरे वधे ॥
प्रसादान्निजनिर्माल्यदाने शेषेऽपि कीर्त्तिता ॥ ६ ॥
शोषस्तु शोषणे राजयक्ष्मण्यपि निगद्यते ॥
दोषः स्याद् दूषणे पापे दोषा रात्रौ भुजेऽपि च ॥ ७ ॥
कोषस्तु कुड्मले पात्रे दिव्ये खड्गपिधानके ॥
जातिकोषेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे ॥ ८ ॥
घोषस्तु घोषके ध्वाने गोपालाभीरपल्लिषु ॥
घोषा तु शतपुष्पायां घोषः कांस्येऽम्बुदध्वनौ ॥ ९ ॥
प्रैषः स्यात् प्रेषणे क्लेशे मर्द्दनोन्मानयोरपि ॥
पौषो मासविशेषे स्यात् पौषन्तु महयुद्धयोः ॥ १० ॥
त्विट् कान्तौ व्यवसाये च जिगीषायां रुचौ गिरि ॥
विट् व्यापने च विष्ठायां शुषिः शोषे विलेऽपि ॥ ११ ॥
ऋषिर्वेदे वशिष्ठादौ दीधितावपि पठ्यते ॥
उषा वाणसुतारात्र्योरुषः कामिनि गुग्गुलौ ॥ १२ ॥
झषा नागबलायां स्याद्वैसारिणि झषो मतः ॥

कर्पूः करीषदहने कुल्यायामपि चेष्यते ॥ १३ ॥

षत्रिकम् ॥

निकषः शाणफलके निकषा यातुमातरि ॥
नहुषो राज्ञि भुजगे कलुषश्चाविलैनसोः ॥ १४ ॥
किल्विषे वृजिने रोगेऽप्यपराधेऽपि किल्विषम् ॥
निमेषानिमिषौ कालप्रभेदेऽक्षिनिमीलने ॥ १५ ॥
परुषं कर्बुरे रूक्षे स्यान्निष्ठुरवचस्यपि ॥
पुरुषः पूरुषे साङ्ख्यज्ञे च पुन्नागपादपे ॥ १६ ॥
पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि ॥
ऊर्द्ध्वविस्तृतदोःपाणिनृमानेऽपि च पौरुषः ॥ १७ ॥
कल्माषो राक्षसे कृष्णे कल्माषं कृष्णपाण्डुरे ॥
कुल्माषो यावके प्रोक्तः कुल्माषं काञ्जिकेऽपि च ॥ १८ ॥
उष्णीषन्तु शिरोवेष्टे किरीटे लक्षणान्तरे ॥
तरीषः शोभनाकारे भेलेऽब्धिव्यवसाययोः ॥ १९ ॥
रोहिषं कत्तृणे ज्ञेयं रोहिषो हरिणान्तरे ॥
विश्लेषः स्याद्विघटने विश्लेषो विधुरेऽपि च ॥ २० ॥
प्रदोषः कालभेदे स्यात् प्रदोषो दोष इष्यते ॥
अभीषुः प्रग्रहे रश्मौ प्रत्यूषोऽहर्मुखे वसौ ॥ २१ ॥
गण्डूषो मुखपूर्त्तौ स्यात् करिहस्ताङ्गुलावपि ॥
प्रसृतोन्मिते शैलूषः कथितो नटबिल्वयोः ॥ २२ ॥
मारिषः शाकभेदे स्यान्मारिषा दक्षमातरि ॥
नाट्योक्त्यां मारिषश्चार्ये तारीषः कनकेऽम्बुधौ ॥ २३ ॥
आमिषं पलले लोभे सम्भोगोत्कोचयोरपि ॥
आमिषं सुन्दराकारपूपादिविषयेऽपि च ॥ २४ ॥
आकर्षः शारिफलके पाशके दूत इन्द्रिये ॥

आकर्षणेऽपि चाऽकर्षः कोदण्डाभ्यासवस्तुनि ॥ २५ ॥
संहर्षमाहुः स्पर्द्धायां प्रमोदेऽपि प्रभञ्जने ॥
शुश्रूषा श्रोतुमिच्छायां परिचर्याकथानयोः ॥ २६ ॥
जिगीषा जेतुमिच्छायां व्यवसायप्रकर्षयोः ॥
महिषी नृपपत्न्याश्च सैरिभ्यामोषधीभिदि ॥ २७ ॥

षचतुष्कम् ॥

अनिमिषः सुरे मत्स्येऽप्यनुकर्षोऽनुकर्षणे ॥
अनुकर्षो रथस्याऽधःस्थिते दारुणि चेष्यते ॥ २८ ॥
अनुतर्षः सुरापानपात्रे तृष्णाभिलाषयोः ॥
वातरूषस्तु वातूलोत्कोचयोः शक्रकार्म्मुके ॥ २९ ॥
अम्बरीषं रणे भ्राष्ट्रेऽप्यम्बरीषो नृपान्तरे ॥
मार्त्तण्डे खण्डपरशावाम्रातककिशोरयोः ॥ ३० ॥
परिघोषो निनादे स्यादवाच्ये जलदध्वनौ ॥
नन्दिघोषोऽर्ज्जुनरथे घोषे वन्दिजनस्य च ॥ ३१ ॥
महाघोषो मतङ्गे च महाघोषोऽतिघोषणे ॥
स्मृता कर्कटशृङ्ग्याश्च महाघोषा मनीषिभिः ॥ ३२ ॥
किम्पुरुषः किन्नरे स्याल्लोकभेदेऽप्यलम्बुषः ॥
छर्द्दनेऽलम्बुषा प्रोक्ता मुण्डीरीस्वर्ग वेश्ययोः ॥ ३३ ॥
पलङ्कषा गोक्षुरकरास्नागुग्गुलुकिंशुके ॥
तुण्डीरीलाक्षयोश्चाऽपि राक्षसेऽपि पलङ्कषः ॥ ३४ ॥

इति षान्तवर्गः ॥

—:०:—

सद्विकम् ॥

रसो गन्धरसे स्वादे चित्तादौ विषरागयोः ॥
शृङ्गारादौ द्रवे वीर्ये देहधातौ च पारदे ॥ १ ॥

रसा तु सल्लकीपावाजिह्वाधरणिकङ्गुषु ॥
भासो भासि समाख्यातो घोष्टकुक्कुटगृध्रयोः ॥ २ ॥
दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि ॥
दासी चेट्याश्च झिण्ट्याश्च रासः कोलाहले ध्वनौ ॥ ३ ॥
भाषाशृङ्खलके रासः क्रीडायामपि गोदुहाम् ॥
वासः सुवर्णचेले स्यात् प्रभेदे किष्कुपर्वणः ॥ ४ ॥
भाः प्रभावे मयूखे च माः स्मृतश्चन्द्रमासयोः ॥
अदः परस्मिन्नत्राऽपि गोसो गन्धरसोषयोः ॥ ५ ॥
वत्सस्तर्णकपुत्रादिवर्षे वत्सन्तु वक्षसि ॥
बुत्सः स्तम्बे हारभेदे स्तबके ग्रन्थिपर्णके ॥ ६ ॥
वासो गेहेऽप्यवस्थाने वासा स्यादटरूषके ॥
व्यासो मुनौ स्याद्विस्तारे त्रासो भीमणिदोषयोः ॥ ७ ॥
हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे ॥
योगिमन्त्रादिभेदेषु परमात्मनि मत्सरे ॥ ८ ॥
निर्लोभनृपतौ हंसः शारीरमरुदन्तरे ॥
अंसः स्कन्धे विभागे च कंसो दैत्यान्तरे स्मृतः ॥
कांस्ये च कांस्यपात्रे च मानभेदेऽपि कीर्त्तितः ॥
मांसः स्यादामिषे मांसी कक्कोलीजटयोरपि ॥ ९ ॥

वसुर्मयूखाग्निजनाधिपेषु
योक्त्रे वके स्माद्वसुहट्टके च ॥
वृद्ध्यौषधश्यामधनेषु रत्ने
वसु स्मृतं स्यान्मधुरेऽन्यवच्च ॥ १० ॥

नासा तु नासिकायां स्यान्नासा द्वारोर्ध्वदारुणि ॥
मृत्सा तु कथिता वासिश्रेष्ठमृत्तिकयोर्बुधैः ॥ ११ ॥
हिंसा चौर्यादिवधयोः शंसा वचनवाञ्छयोः ॥

मिसिस्तु मधुरामांस्योर्गजपुष्पाजमोदयोः ॥ १२ ॥
कासूर्विकलवाचि स्यात् लासूः शक्त्यायुधेऽपि च ॥
प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोरपि ॥ १३ ॥

सत्रिकम् ॥

अलसः पादरोगे स्यात् क्रियामन्दे द्रुमान्तरे ॥
अलसा हंसपद्याञ्च रभसो वेगहर्षयोः ॥ १४ ॥
पनसः कण्टकिफले कण्टके कपिरुग्भिदोः ॥
सुरसः स्यात् सुमधुरे पर्णासे सुरसाऽपि च ॥ १५ ॥
सारसः पक्षिभेदे स्यात् सारसं सरसीरुहे ॥
श्रीवासो यक्षधूपे स्यात् पङ्कजे पीतवाससि ॥ १६ ॥
साहसन्तु बलात्कारकृतकार्ये दमेऽपि च ॥
वाहसो जलनिर्यासेऽजगरे सुनिषण्णके ॥ १७ ॥
लालसो लालसाऽपि स्याद्याच्ञातृष्णातिरेकयोः ॥
औत्सुक्ये च समासस्तु संक्षेपे च समर्थने ॥ १८ ॥
कीकसः कृमिजातौ स्यादस्थ्नि कीकसमिष्यते ॥
पायसं परमान्ने स्याच्छ्रीवासेऽपि च पायसः ॥ १९ ॥
वायसो नाडिजङ्घे स्याच्छ्रीवासे चागुरुद्रुमे ॥
काकोदुम्बरिकायाञ्च काकमाच्याञ्च वायसी ॥ २० ॥
मानसं सरसि स्वान्तेऽप्याश्वासो निर्वृतौ मतः ॥
आख्यायिकापरिच्छेदेऽप्यभ्यासो व्यसनेऽन्तिके ॥ २१ ॥
उच्छ्वासः प्राणनाश्वासगद्यबन्धगुणान्तरे ॥
इष्वासो धन्विधनुषोर्विलासो भावलीलयोः ॥ २२ ॥
वीतसो बन्धनोपाये मृगाणां पक्षिणामपि ॥
तेषामपि च विश्वासहेतोः प्रावरणे स्मृतम् ॥ २३ ॥
उत्तंसः कर्णपूरे स्याच्छेकरे च वतंसवत् ॥

बीभत्सो विकृते क्रूरेऽप्यर्जुने च घृणात्मनि ॥ २४ ॥
विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत् ॥
भूयान् बहुतरार्थे स्यात् पुनरर्थे त्वदोऽव्ययम् ॥ २५ ॥
ज्यायान् वृद्धे च शस्ते च हविर्होतव्यसर्पिषोः ॥
रेपाः स्यादधमे क्रूरे कृपणेऽपि च कथ्यते ॥ २६ ॥
वेधा विधौ बुधे विष्णावागः पापापराधयोः ॥
वर्चो दीप्तौ पुरीषे च वर्चो रूपेऽपि च क्वचित् ॥ २७ ॥
छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः ॥
एनोऽपराधे कलुषे मनश्चित्तमनीषयोः ॥ २८ ॥
रोदश्च रोदसी चाऽपि दिवि भूमौ पृथक् पृथक् ॥
सह प्रयोगेऽप्यनयो रोदः स्यादपि रोदसी ॥ २९ ॥
ओजस्तेजसि धातूनामवस्तम्भप्रकाशयोः ॥
भुजो बले च दीप्तौ च तेजो धाम्नि पराक्रमे ॥ ३० ॥
प्रभावरेतसोश्चाथ रजः स्यादार्त्तवे गुणे ॥
रजःपरागे रेणौ तु रजवत् परिकीर्त्तितम् ॥ ३१ ॥
वपुर्भव्याकृतौ देहे पयः स्यात् क्षीरनीरयोः ॥
वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके ॥ ३२ ॥
श्रेयस्तु मङ्गले धर्मे श्रेयान् शस्ते तु वाच्यवत् ॥
श्रेयसी करिपिप्पल्यामभयारास्नयोरपि ॥ ३३ ॥
स्रोतोऽम्बुवेगेन्द्रिययोरोकः सद्मनि चाश्रये ॥
शिरः प्रधाने सेनाग्रभागमस्तकयोरपि ॥ ३४ ॥
तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि च ॥
तपा माघे च शिशिरे सरस्तोयतडागयोः ॥ ३५ ॥
उषः प्रभाते सन्ध्यायामुरः श्रेष्ठे च वक्षसि ॥
तमोऽन्धकारे स्वर्भानौ तमःशोके गुणान्तरे ॥ ३६ ॥

नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे ॥
घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः ॥ ३७ ॥
तरो बले च वेगे च रेतः शुक्रे च पारदे ॥
अर्चिर्मयूखशिखयोर्बर्हिः कुशहुताशयोः ॥ ३८ ॥

सहो बले ज्योतिषि मार्गशीर्ष-
हेमन्तयोश्चाऽपि सहः प्रदिष्टः ॥
रहोऽपि गुह्ये सुरते च तत्त्वे
महो भवेदुत्सवतेजसोश्च ॥ ३९ ॥
ज्योतिः प्रकाशे दृशि तारकासु
ज्योतिर्दिनेशानलयोरपि स्यात् ॥
धनुः प्रियालद्रुमराशिभेदयोः
शरासने चापि धनुर्धनुर्धरे ॥ ४० ॥

आशीरुक्ता हिताशंसापवनाशनदंष्ट्रयोः ॥
राक्षसीति च दंष्ट्रायां राक्षसी रक्षसः स्त्रियाम् ॥ ४१ ॥
तामसीति च दुर्गायां तामसो भुजगे खले ॥
पुक्कसी कालिकानील्योः पुक्कसः श्वपचेऽधमे ॥ ४२ ॥

सचतुष्कम् ॥

भवेद्घनरसः सान्द्रनिर्यासमोरटाप्सु च ॥
कर्पूरे पीलुपर्ण्यांश्च सस्ये सिद्धरसेऽपि च ॥ ४३ ॥
सर्वरसः स्मृतो वाद्यभाण्डभेदे च धूनके ॥
स्मृतं तामरसं पद्मे ताम्रकाञ्चनयोरपि ॥ ४४ ॥
सिद्धरसो रसे व्याधिप्रभृतीषु च दृश्यते ॥
महारसः स्यात् खर्जूरे कोशकारकसेरुणोः ॥ ४५ ॥
रासेरसस्तु रासे स्याद्रससिद्धिबलावपि ॥

षष्ठीजागरिके गोष्ठ्यां शृङ्गारपरिहासयोः ॥ ४६ ॥
श्वःश्रेयसश्च भद्रे स्यात् परानन्दे च शर्मणि ॥
निःश्रेयसश्च कल्याणे चन्द्रचूडापवर्गयोः ॥ ४७ ॥
कुम्भीनसो विषज्वालाकुलदृष्टिभुजङ्गमे ॥
कुम्भीनसी जनन्याश्च लवणाख्यस्य रक्षसः ॥ ४८ ॥
मलीमसन्तु मलिने पुष्पकासीसलोहयोः ॥
पौर्णमासपौर्णमास्यौ यज्ञपूर्णिमयोः क्रमात् ॥ ४९ ॥
अधिवासो निवासे च संस्कारे धूपकादिभिः ॥
चन्द्रहासो दशग्रीवकरवालेऽसिमात्रके ॥ ५० ॥
विश्वावसुः स्याद्गन्धर्वभेदे विश्वावसुर्निशि ॥
विभावसुर्दिनमणौ हारभेदे च पावके ॥ ५१ ॥
पुनर्वसुर्भवेदृक्षे कात्यायनमुनावपि ॥
राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः ॥ ५२ ॥
कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे ॥
अवध्वंसः परित्यागे निन्दनेऽप्यवचूर्णने ॥ ५३ ॥
स्मृता मधुरसा द्राक्षा मूर्विका दुग्धिकासु च ॥
नीलङ्गसाऽप्सरोभेदे सरिद्भेदेऽपि विद्युति ॥ ५४ ॥
सुमेधास्तु सुबुद्धौ स्याज्ज्योतिष्मत्यामपीष्यते ॥
सुमनाः पुष्पमालत्योस्त्रिदशे कोविदेऽपि च ॥ ५५ ॥
प्रचेतास्तु मुनौ हृष्टे स्यात् प्रतीचीपतावपि ॥
विहायास्तु शकुन्ते स्याद्विहायः सुरवर्त्मनि ॥ ५६ ॥
त्रिस्रोता जह्नुकन्यायां त्रिस्रोताः सरिदन्तरे ॥
अगौकाश्च नगौकाश्च शरभे सिंहपक्षिणोः ॥ ५७ ॥
उदर्चिरुत्प्रभे वह्नौ दिवौकाश्चातके सुरे ॥
दीर्घायुः शाल्मलौ काके मार्कण्डेयेऽतिजीविनि ॥ ५४ ॥

सप्तार्च्चिः पावके प्रोक्तः सप्तार्च्चिः क्रूरलोचने ॥
कनीयाननुजेऽत्यल्पे कनीयानतियूनि च ॥ ५९ ॥
वरीयानतियूनि स्याद्वरिष्ठे श्रेष्ठयोगयोः ॥
साधीयानतिबाढे स्यादतिसाधौ च वाच्यवत् ॥ ६० ॥

सपञ्चकम् ॥

स्यान्नभश्चमसश्चन्द्रे चित्रापूपेन्द्रजालयोः ॥
हिङ्गुनिर्यास इत्येष निम्बे हिङ्गुरसेऽपि च ॥ ६१ ॥
दिव्यचक्षुः सुगन्धस्य भेदेऽन्धे च सुलोचने ॥

सपट्कम् ॥

हिरण्यरेतसम्प्राहुर्दिवाकरहविर्भुजोः ॥ ६२ ॥

इति सान्तवर्गः ॥

—:०:—

हद्विकम् ॥

सहो बले सहा मुद्गपर्ण्याञ्च नखभेषजे ॥
सहा देवीकुमार्योश्च सहः कान्ते सहा भुवि ॥ १ ॥
ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे ॥
सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥ २ ॥
वहः स्याद्वृषभस्कन्धदेशे गन्धवहेऽपि च ॥
बर्ह दले केकिपिच्छे गृहाः पत्न्यां गृहे स्मृताः ॥ ३ ॥
ग्राहो ग्रहेऽवहारे च नाहो बन्धनकूटयोः ॥
स्नेहस्तैलादिकरसद्रव्ये स्यात् सौहृदेऽपि च ॥ ४ ॥
प्रोहो निपुणतर्के स्यात् प्रोहो हस्त्याङ्घ्रिपर्वणोः ॥
मोहमिच्छन्ति मूर्च्छायामविद्यायाञ्च सूरयः ॥ ५ ॥

लोहस्तु शस्त्रके लोहं जोङ्गके सर्वतैजसे ॥
व्यूहः स्याद् बलविन्यासे निर्माणे वृन्दतर्कयोः ॥ ६ ॥
सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः ॥
सिंही क्षुद्रा बृहत्योः स्याद्वासके राहुमातरि ॥ ७ ॥
बहुः स्याद्विपुले त्र्यादि सङ्ख्यासु त्वभिधेयवत् ॥
अहिर्वृत्रासुरे सर्पेऽपीहा तूद्यमवाञ्छयोः ॥ ८ ॥
गुहा तु गह्वरे सिंहपुच्छ्यां स्कन्दे गुहो मतः ॥
वाह्वो भुजायां वाहस्तु मानभेदे वृषे हये ॥ ९ ॥
मही भूमौ मही नद्यां मह उत्सवतेजसोः ॥
कुहूः स्यात् कोकिलारावनष्टेन्दुकरदर्शयोः ॥ १० ॥

हत्रिकम् ॥

पटहस्तु समारम्भ आनकं पटहं मतम् ॥
कलहः खड्गकोशे स्याद्भण्डने युद्धराढयोः ॥ ११ ॥
प्रग्राहस्तु तुलासूत्रे बन्द्यां नियमने भुजे ॥
हयादिरश्मौ रश्मौ च सुवर्णहालिपादपे ॥ १२ ॥
निग्रहो भर्त्सने प्रोक्तो मर्यादायाश्च बन्धके ॥
विग्रहः समरे काये विस्तारप्रविभागयोः ॥ १३ ॥
सङ्ग्राहो बृहदुत्तुङ्गे मुष्टिसंक्षेपयोरपि ॥
आग्रहोऽनुग्रहाशक्त्योराक्रमे ग्रहणेऽपि च ॥ १४ ॥
नवाहः स्यान्नवदिने नवाहः प्रतिपत्तिथौ ॥
प्रवाहो व्यवहारे स्यादपि स्रोतसि वारिणः ॥ १५ ॥
कटाहो घृततैलादिपाकपात्रे च खर्परे ॥
कटाहः कूर्मपृष्ठे च स्तूपे च महिषीशिशौ ॥ १६ ॥
उत्साहस्तूद्यमे सूत्रेऽप्यारोहे दैर्घ्यमानयोः ॥

आरोहणे नितम्बे च समुच्छ्रयनिषादिनोः ॥ १७ ॥
निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके ॥
विदेहो देहशून्ये स्याद्विदेहो मिथिले स्मृतः ॥ १८ ॥
निरूहो वस्तिभेदे स्यात् तर्कनिश्चितयोरपि ॥
दात्यूहः कालकण्ठे स्याद्दात्यूहश्चातकेऽपि च ॥ १९ ॥
अत्यूहा नीलिकायां स्यादत्यूहश्चित्रमेखले ॥
सुवहा सल्लकीगोधापदीशेफालिकासु च ॥ २० ॥
एलापर्ण्याश्च सुवहा वल्लकीरास्नयोरपि ॥
सम्यग्वाहे तु सुवहो वाच्यवत् समुदाहृतः ॥ २१ ॥
वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीष्वपि ॥
वाराही मातृभेदे स्याद् गृष्टिनामौषधेऽपि च ॥ २२ ॥

## हचतुष्कम् ॥

अवग्रहा इति ख्यातो वृष्टिरोधे गजालिके ॥
स्वतन्त्रतानिषेधेऽपि प्रतिबन्धेऽप्यवग्रहः ॥ २३ ॥
प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे ॥
द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे ॥ २४ ॥
परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः ॥
शापेऽप्युपग्रहो वन्द्यामुपयोगेऽनुकूलने ॥ २५ ॥
अभिग्रहोऽभियोगेऽभिग्रहणे गौरवेऽपि च ॥
परिबर्हन्तु राजार्हवस्तुन्यऽपि परिच्छदे ॥ २६ ॥
पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च ॥
तमोऽपहः सहस्रांशुमृगाङ्कजिनवह्निषु ॥ २७ ॥
उपनाहो व्रणालेपपिण्डे वीणानिबन्धने ॥
परीवाहो जलोच्छ्वासे महीभृद्भोग्यवस्तुनि ॥ २८ ॥

तनूरुहं गरुल्लोम्नोर्वरारोहाकटावपि ॥
वरारोहस्तु कथितो हस्त्यारोहावरोहयोः ॥ २९ ॥
अवरोहोऽवतरणे तरोरङ्के लतोद्गमे ॥
अश्वारोहाऽश्वगन्धायामश्वारोहोऽश्ववारके ॥ ३० ॥
महासहा माषपर्ण्यामम्लानकुसुमेऽपि च ॥
गन्धवहा तु नासायां वायौ गन्धवहो मतः ॥ ३१ ॥
भवेदेकसहाभिख्या स्नुते दण्डोत्पलौषधौ ॥

हपञ्चकम् ॥

प्रापितामह इत्येष विधौ पितृपितामहे ॥ ३२ ॥

इति हान्तवर्गः ॥

—:०:—

षान्ताः स्युर्यद्यपि क्षान्ता वर्णानामनुरोधतः ॥
पृथक्क्रमेण कथ्यन्ते तथाऽप्येते समन्वयात् ॥ १ ॥

क्षद्विकम् ॥

अक्षः कर्षे तुषे चक्रे शकटे व्यवहारयोः ॥
आत्मज्ञे पाशके चाक्षं तुत्थसौवर्चलेन्द्रिये ॥ २ ॥
ऋक्षोऽद्रिभेदे भल्लूके शोणके कृतवेधने ॥
ऋक्षमुक्तश्च नक्षत्रे यक्षः श्रीदे च गुह्यके ॥ ३ ॥
दक्षः पटौ हरवृषे ताम्रचूडे प्रजापतौ ॥
मुनिभेदे द्रुमे वह्नौ दक्षो दक्षा भुवि स्मृता ॥ ४ ॥
पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः ॥
पक्षश्च परतो वृन्दे बले सखिसहाययोः ॥ ५ ॥
पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुञ्जके ॥
लक्षं शरव्ये सङ्ख्यायां लक्षं छद्मनि कथ्यते ॥ ६ ॥

प्लक्षो द्वीपविशेषे स्यात् पर्कटीगर्द्दभाण्डयोः ॥
पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्त्तितः ॥ ७ ॥
न्यक्षः परशुरामे स्यान्न्यक्षः कात्स्न्र्ये निकृष्टयोः ॥
चोक्षो गीते शुचौ दक्षे तथा तीक्ष्णमनोज्ञयोः ॥ ८ ॥
ध्वाङ्क्षस्तु काकबकयोस्तर्क्कुके भिक्षुके गृहे ॥
ध्वाङ्क्षी कक्कोलिकायां स्यात् कक्षो दोर्मूलकच्छयोः ॥ ९ ॥
सैरिभे च वृषे कक्षः शुष्ककाननवीरुधोः ॥
कक्षा ग्राहणिकाकाञ्चीप्रकोष्ठगजरज्जुषु ॥ १० ॥
सार्द्धे पदे परीधानपश्चादञ्चलपल्लवे ॥
रथभागेऽपि कक्षा स्याद्दीक्षा विस्मयदृश्ययोः ॥ ११ ॥
मोक्षो मुष्ककवृक्षे स्यादपवर्गे च मोचने ॥
रूक्षः पादपजातौ स्याद् रूक्षोऽप्रेमण्यचिक्कणे ॥ १२ ॥
भिक्षा भृतौ च याच्ञायां सेवाभिक्षितवस्तुनोः ॥
प्रेक्षाऽनुत्प्रेक्षणे बुद्धौ रक्षा रक्षणरक्षयोः ॥ १३ ॥

क्षत्रिकम्

अध्यक्षोऽधिकृते प्रोक्तः प्रत्यक्षेऽध्यक्षमिष्यते ॥
गोरक्षो नागरङ्गे स्याद् गवाञ्च परिरक्षके ॥ १४ ॥
आरक्षो रक्षणीये स्याच्छीर्षमर्माणि दन्तिनाम् ॥
रक्ताक्षः कासरे क्रूरे पारावतचकोरयोः ॥ १५ ॥
समीक्षा ग्रन्थभेदे स्यात् तत्त्वबुद्धौ निभालने ॥
उत्प्रेक्षाऽनवधाने स्यात् काव्यालङ्करणेऽपि च ॥ १६ ॥
मृगाक्षी चेन्द्रवारुण्यां मृगनेत्रात्रियामयोः ॥
गवाक्षी शक्रवारुण्यां गवाक्षो जालके कपौ ॥ १७ ॥

क्षचतुष्कम् ॥

वीरवृक्षस्तु भल्लातककुभद्रुमयोर्मतः ॥

राजवृक्षः प्रियाले स्यात् सुवर्णालुतरावपि ॥ १८ ॥
देववृक्षः सप्तपर्णे मन्दरादिषु गुग्गुलौ ॥
भूतवृक्षस्तु शाकोटे तथा श्योनाकपादपे ॥ १९ ॥
विशालाक्षो हरे तार्क्ष्ये विशालाक्षी वरस्त्रियाम् ॥
सकटाक्षो धवद्रौ स्यात् कटाक्षसहितेऽपि च ॥ २० ॥

इति क्षान्तवर्गः ॥

इति श्रीसकलवैद्यराजचक्रमुक्ताशेखरस्य
गद्यपद्यविद्यानिधेः श्रीमहेश्वरस्य कृतौ
विश्वप्रकाशे अनेकार्थशब्द-
परिच्छेदः प्रथमः ॥

## द्वितीयः परिच्छेदः ॥ २ ॥

### अव्ययानि ॥

अथाव्ययानि वक्ष्यन्ते व्यक्तं पूर्वाक्षरक्रमात् ॥
अकारादिकमप्यस्ति नाधिकं पूर्वतोऽपि च ॥ १ ॥

अ ॥

अ स्यादभावे स्वल्पार्थे विष्णावीशे त्वनव्ययम् ॥

आङ् ॥

आङ् सीमायां परिव्याप्तौ क्रियायोगेषदर्थयोः ॥ २ ॥

आ ॥

आ प्रगृह्यः स्मृतौ वाक्ये आः स्यात् सन्तापकोपयोः ॥

इ ॥

इ खेदे च रुषोक्तौ च कामदेवे त्वनव्ययम् ॥ ३ ॥

ई ॥

ई दुःखभावने कोपे लक्ष्म्यामीः स्यादनव्ययम् ॥

उ ॥

उ सम्बुद्धौ रुषोक्तौ च शम्भुवाची त्वनव्ययम् ॥ ४ ॥

ऊ ॥

ऊ वाक्यारम्भेऽनुकम्पारक्षाहूतिष्वनव्ययम् ॥

ऋ

ऋ वाक्ये चाऽपि कुत्सायां देवाम्बायान्त्वनव्ययम् ॥ ५ ॥

ए ऐ ॥

ए-ऐ-शब्दौ तु हे-है-वत् स्मृत्यामन्त्रणहूतिषु ॥

ओ औ ॥

ओऔशब्दौ च होहौवत् सम्बुद्ध्याह्वानयोर्मतौ ॥ ६ ॥

कान्ताः ॥

कु पापे चेषदर्थे च कुत्सायाञ्च निवारणे ॥
मनागल्पे च मन्दे च धिग् निर्भर्त्सननिन्दयोः ॥ ७ ॥

गान्ताः ॥

अङ्ग सम्बोधने हर्षे पुनरर्थे च कीर्त्तितम् ॥

चान्ताः ॥

तिर्यक् तिरोऽर्थे वक्रे च विहङ्गादौ त्वनव्ययम् ॥ ८ ॥
चान्वाचये समाहारेऽप्यन्योन्यार्थे समुच्चये ॥
पक्षान्तरे तथा पादपूरणेऽप्यवधारणे ॥ ९ ॥
प्राक् प्रभातेऽप्यतीते च दिग्देशकालतः स्मृतम् ॥
प्रागऽग्रेऽपि च पूर्वस्मिन् भवे प्रागप्यनन्तरे ॥ १० ॥
ननुच प्रश्नदृष्टयोक्त्योः सम्यग्गाढप्रशंसयोः ॥
किञ्चारम्भे च साकल्ये हिरुग् मध्यविनार्थयोः ॥ ११ ॥

ञान्ताः ॥

नञऽभावे निषेधे च स्वरूपार्थे व्यतिक्रमे ॥
ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः ॥ १२ ॥

ठान्ताः ॥

सुष्ठु प्रशंसनेऽपि स्यादत्यर्थेऽपि च कथ्यते ॥
अपष्ठु निरवद्ये स्याच्छोभमानेऽपि च स्मृतम् ॥ १३ ॥

णान्तः ॥

अन्तरेण-पदं विद्याद्विनामध्यार्थयोरपि ॥

तान्ताः ॥

तु पादपूरणे भेदे समुच्चयेऽवधारणे ॥ १४ ॥
अस्तु स्यादभ्यनुज्ञानेऽप्यसूयानीहयोरपि ॥

किंस्वित् प्रश्ने वितर्के च शश्वत् पुनःसदार्थयोः ॥
पश्चात् प्रतीच्यां चरमे साक्षात् प्रत्यक्षतुल्ययोः ॥
सकृत् सहैकवारे स्यादाराद् दूरसमीपयोः ॥ १५ ॥
यावत् तावत् परिच्छेदे कार्त्स्न्ये मानेऽवधारणे ॥
पुरस्ताच्चतुर्षु प्राच्यां पुरार्थे प्रथमेऽग्रतः ॥ १६ ॥
उत प्रश्ने वितर्के स्यादुताऽप्यर्थविकल्पयोः ॥
किमुतातिशये प्रश्ने विकल्पे च प्रयुज्यते ॥ १७ ॥
हन्त हर्षे विषादे च वाक्यारम्भविवादयोः ॥
स्वस्त्याशीःक्षेमपुण्यादौ तद्वत् प्रश्नविकल्पयोः ॥ १८ ॥
बताऽमन्त्रणसन्तोषखेदानुक्रोषविस्मये ॥
अहोबताऽनुकम्पायां खेदे सम्बोधनेऽपि च ॥ १९ ॥
तत आदौ परिप्रश्ने पञ्चम्यर्थे कथान्तरे ॥
आनन्तर्ये कुतः प्रश्ने पञ्चम्यर्थे च निह्नवे ॥ २० ॥
अतो भवेत् कारणापदेशनिर्देशयोरपि ॥
पञ्चम्यर्थे ततः प्रोक्तं पञ्चम्यर्थे च शासने ॥ २१ ॥
सम्भावनावयवयोरन्ततः—पदमिष्यते ॥
इतो यतश्च नियमे पञ्चम्यर्थविभागयोः ॥ २२ ॥
इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु ॥
निदर्शनप्रकारे स्यादनुकर्षे च सम्मतम् ॥ २३ ॥
अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽप्यति ॥
नितान्तासम्प्रतिक्षेपवाचकोऽप्येष दर्शितः ॥ २४ ॥
प्रति प्रतिविधौ वीप्सा लक्षणेषु प्रयोगतः ॥
मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रति ॥ २५ ॥

थान्ताः ॥

अथो अथ च सम्प्रश्ने मङ्गलारम्भयोरपि ॥

अनन्तरे च कार्त्स्न्ये च संशये च प्रकीर्तितः ॥ २६ ॥
यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः ॥
तथा स्यान्निश्चये पृष्टप्रतिवाक्ये समुच्चये ॥ २७ ॥
उभौ चोद्देशनिर्देशसादृश्येषु प्रकाशितौ ॥
कारकस्योऽपपत्तौ च सर्वथा हेतुबाढयोः ॥ २८ ॥
अन्यथा वितथार्थे स्यादन्यथा चाऽपरार्थके ॥
वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्ज्जिते ॥ २९ ॥

दान्ताः ॥

उत् प्रकाशे विभागे च प्राबल्यास्वास्थ्यशक्तिषु ॥
प्राधान्ये बन्धने भावे मोक्षे लाभोर्द्ध्वकर्मणोः ॥ ३० ॥

नान्ताः ॥

नु स्यात् प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः ॥
ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे ॥ ३१ ॥
आमन्त्रणे चाऽपि ननु किन्तु प्रश्नवितर्कयोः ॥
नाना विनार्थेऽपि भवेन्नानाऽनेकोभयार्थयोः ॥ ३२ ॥
स्थाने तु कारणार्थे च युक्तसादृश्ययोरपि ॥
अनु हीने सहार्थे च पश्चात् सादृश्ययोरनु ॥ ३३ ॥
आयामे च नियामे च लक्षणादावनुक्रमे ॥
नि निवेशभृशार्थाधोभावविन्यासराशिषु ॥ ३४ ॥
आश्रये बन्धने मोक्षे दारकर्मणि दर्शने ॥
अन्तर्भावे च सामीप्यकौशलोपरमेषु च ॥
नित्यार्थे संयमे चाऽपि क्षेपार्थेऽपि च विश्रुतम् ॥ ३५ ॥

पान्ताः ॥

अप स्यादपकृष्टार्थे वर्ज्जनार्थवियोगयोः ॥

विपर्यये ऽपि विकृतौ चौर्ये निर्देशहर्षयोः ॥ ३६ ॥
उप सामर्थ्यदाक्षिण्यदोषाख्यानात्ययेषु च ॥
आचार्यकरणे दाने व्याप्तावारम्भपूजयोः ॥ ३७ ॥
तद्योगेऽपि च लिप्सायां भरणार्थोपमार्थयोः ॥
उप हीनेऽधिके प्रोक्तोऽप्यासन्नेऽप्युप कीर्त्तितः ॥ ३८ ॥
अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये ॥
तथा युक्तपदार्थेषु कामचाराक्रियासु च ॥ ३९ ॥

बाऽन्ताः ।

वशब्द उपमायां स्याद्वरुणे वानुनयेऽपि च ॥
वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये ॥ ४० ॥
वि श्रेष्ठातीतनानार्थे विः स्यात् पक्षिष्वनव्ययम् ॥
वै स्यात् सम्बोधने पादपूरणेऽनुनयेऽपि च ॥ ४१ ॥

भान्ताः ॥

अभीऽत्थम्भूतकथनेऽप्यभि वीप्साभिमुख्ययोः ॥

मान्ताः ॥

स्म पादपूरणेऽतीते सामि निन्दार्द्धयोर्मतम् ॥ ४२ ॥
अमा सहार्थान्तिकयोर्नूनं निश्चिततर्कयोः ॥
कामम् प्रकामेऽनुमतावसूयानुगमेऽपि च ॥ ४३ ॥
नाम प्राकाश्यसम्भाव्यकुत्साभ्युपगमेषु च ॥
साम्प्रतं चाधुनार्थे स्याद् युक्तार्थेऽपि च साम्प्रतम् ॥ ४४ ॥
हुं वितर्के परिप्रश्ने हुं रुषोक्त्यनुनीतिषु ॥
तुम् प्रश्नेऽङ्गीकृतौ रोषे आस्मृतौ चावधारणे ॥ ४५ ॥
कुं प्रश्नेऽपि रुषोक्तौ च प्राध्वं नम्रानुकूलयोः ॥
किं प्रश्नेऽपि च कुत्सायां कं शिरःसुखवारिषु ॥ ४६ ॥

नुमित्यनुमतौ प्रोक्तं प्रणवे चाऽप्युपक्रमे ॥
एवं प्रकारोपमयोरङ्गीकारेऽवधारणे ॥ ४७ ॥
अलं भूषणपर्याप्तिवारणेषु निरर्थके ॥
अलं शक्तौ च निर्दिष्टं शं कल्याणे सुखेऽपि च ॥ ४८ ॥
सं सङ्गार्थे प्रकृत्यर्थे शोभनार्थसमर्थयोः ॥
जोषं सुखे प्रशंसायां तूष्णींलङ्घनयोरपि ॥ ४९ ॥
तूष्णीकं तु स्मृतं मौने मौनशीले त्वनव्ययम् ॥
तद्दिनं दिनमध्ये स्यात् तद्दिनं प्रतिवासरे ॥ ५० ॥
अभीक्ष्णं मुहुरश्रान्ते शीघ्रप्रकर्षयोरपि ॥
अभीक्ष्णं तु तथापौनःपुन्ये स्यात् सन्ततेऽपि च ॥ ५१ ॥
इदानीं वाक्यभूषायां सम्प्रत्यर्थे च वर्त्तते ॥
कथं प्रश्ने सम्भ्रमे च प्रकारार्थे च सम्भवे ॥ ५२ ॥
किमु सम्भावनायां स्याद्विमर्षे च किमु स्मृतम् ॥
भृशं प्रकर्षे चात्यर्थेऽवश्यं नित्यप्रयत्नयोः ॥ ५३ ॥

यान्ताः ॥

अयि प्रश्नानुनययोः समयान्तिकमध्ययोः ॥
अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च ॥ ५४ ॥

रान्ताः ॥

प्र प्रकर्षे गताद्यर्थे दुः स्यात् कष्टनिषेधयोः ॥
पुनरप्रथमे भेदे स्वः स्वर्गपरलोकयोः ॥ ५५ ॥
परा विमोक्षप्राधान्यप्रतिलोमेषु वर्त्तते ॥
आभिमुख्ये भूषार्थे च विक्रमे च गतौ वधे ॥ ५६ ॥
पुरा पुराणे निकटप्रबन्धातीतभाविषु ॥
परि स्यात् सर्वतोभावे वर्ज्जने लक्षणादिषु ॥ ५७ ॥

पूजालिङ्गनवीप्सासु भूषणे व्याधिशोकयोः ॥
दोषाख्यानेऽप्युपरमे व्याप्तौ निवसनेऽपि च ॥ ५८ ॥
प्रादुः प्राकाश्यवृत्तौ स्यात् सम्भाव्ये च प्रयुज्यते ॥
निर्निश्चये क्रान्ताद्यर्थे निर्निःशेषनिषेधयोः ॥ ५९ ॥
अन्तर्मध्ये तथा प्रान्ते स्वीकारार्थेऽपि दृश्यते ॥
उररी चोररी चोरी विस्तारेऽङ्गीकृतौ त्रयम् ॥ ६० ॥
अन्तराऽपि विनार्थे स्यान्मध्यार्थनिकटार्थयोः ॥

लान्ताः ।

किलशब्दस्तु वार्त्तायां सम्भाव्यानुनयार्थयोः ॥ ६१ ॥
खलु स्याद्वाक्यभूषायां जिज्ञासादौ च सान्त्वने ॥
निषेधनेऽपि वीप्सायां खलु माने च कीर्त्तितम् ॥६२॥

वाऽन्ताः ॥

अवाऽलम्बनविज्ञानवियोगव्याप्तिशुद्धिषु ॥
ईषदर्थे परिभवेऽप्येवौपम्येऽवधारणे ॥ ६३ ॥

षान्ताः ॥

उषा रात्रौ तदन्ते स्यादत्रानव्ययमप्युषा ॥
दोषा रात्रिमुखे रात्रावत्रानव्ययमप्यसौ ॥ ६४ ॥
निकषा त्वन्तिके मध्ये रक्षोमातर्यनव्ययम् ॥
सु पूजायां भृषार्थानुमतिकृच्छ्रसमृद्धिषु ॥ ६५ ॥
पुरतः प्रथमे चाऽग्रेऽप्यग्रतः प्रथमाग्रयोः ॥
पुरोऽग्रे प्रथमे च स्यादञ्जसा तत्त्वतूर्णयोः ॥ ६६ ॥
अभितः शीघ्रसाकल्यसम्मुखोभयतोऽन्तिके ॥
भूयः पुनः पुनः ख्यातं प्रभूतार्थे त्वनव्ययम् ॥ ६७ ॥
निर्निश्चये निषेधे च साकल्यातीतयोरपि ॥

तिरोऽन्तर्द्धौ तिर्यगर्थे मिथोऽन्योन्यं मिथो रहः ॥ ६८ ॥
पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे ॥
शनैः शनैश्चरे स्वैरे नीचैः स्वैराल्पयोर्मतम् ॥ ६९ ॥

हान्ताः ॥

ह स्यात् सम्बोधने पादपूरणेऽनव्ययं शिवे ॥
हा विषादे च शोके च दुःखार्थेऽपि च कथ्यते ॥ ७० ॥
हि पादपूरणे हेतौ विशेषेऽप्यवधारणे ॥
ही दुःखहेतावुद्दिष्टो ही विस्मयविषादयोः ॥ ७१ ॥
हाहा दुःखे हुहू हर्षे गन्धर्वेऽमू त्वनव्यये ॥
हे है व्यस्तौ समस्तौ च हूतिसम्बोधनार्थयोः ॥ ७२ ॥
हो हौ चैवंविधौ ज्ञेयौ सम्बुद्धाह्वानयोरपि ॥
सह साकल्यसादृश्ययौगपद्यसमृद्धिषु ॥ ७३ ॥
विद्यमाने च सम्बन्धे सहशब्दः प्रकीर्त्तितः ॥
अहो धिगर्थे शोके च करुणार्थविषादयोः ॥ ७४ ॥
आहो उताहो द्वावेतौ परिप्रश्नविचारयोः ॥
अह-शब्दो नियोगार्थे क्षेपार्थेऽपि निगद्यते ॥

क्षान्ताः ॥

मङ्क्षु शीघ्रे भृषार्थे च तत्त्वार्थेऽपि क्वचिन्मतम् ॥ ७५ ॥

इत्यव्ययानेकार्थवर्गः ॥

यद्यपूर्वतया किञ्चिन्नामात्र प्रतिभाति च ॥
तत्तदन्विष्यतां सद्भिर्नामपारायणादिषु ॥ १ ॥

तत्तत्कवीन्द्रैरथ पण्डितेन्द्रैः
प्रयोगसम्बोधफलद्वयाप्त्यै ॥
यैर्नामकण्ठाभरणं कृतं तैः
सर्वज्ञता स्वप्रणयीकृतैव ॥ २ ॥

स्वैरप्रचारैः परिकल्पिताभिः
शब्दार्थसम्बोधकथाप्रथाभिः ।
व्याख्याभिरप्राप्तमुदो ममोद-
माधातुमत्रैष परिश्रमो नः ॥ ३ ॥
एतां कृतिं कृतधियः कृतकृत्यभाव-
मापादयन्तु सदयं, सदयं तु चेतः ।
नित्यं महेश्वरकवेः परिभावयन्तः
सन्तः परोन्नतिरता हि भवन्ति लोके ॥ ४ ॥
रामानलव्योमरूपैः शककालेऽभिलक्षिते ।
कोषं विश्वप्रकाशाख्यं निरमाच्छ्रीमहेश्वरः ॥ ५ ॥

इति श्रीसकलवैद्यराजचक्रमुक्ताशेखरस्य गद्यपद्यविद्यानिधेः श्रीमहेश्वरस्य कृतौ विश्वप्रकाशे अनेकार्थाव्ययपरिच्छेदो द्वितीयः ॥

---

समाप्तोऽयं विश्वप्रकाशः ॥

---

शुभमस्तु ।